॥ श्रीः ॥

श्रीकवितार्किकसिंह-सर्वतन्त्रस्वतन्त्र

श्रीमन्निगमान्तमहादेशिकविरचितं

# ईशावास्योपनिषद्भाष्यम् ॥

तद्व्याख्यानं

# आचार्यभाष्यतात्पर्यं च ॥

---


जगद्विख्यातश्रीपरमहंसपरिव्राजक (कोळियालम्)

श्रीमद्रङ्गरामानुजमहादेशिकपदपद्मद्वन्द्वपरिचरण-

प्राप्तसकलवेदान्तरहस्यार्थेन

तन्त्रादिनिष्णातेन 'तर्कार्णवेन' 'शिरोमणिना'

(उत्तमूर्)

ति. वीरराघवाचार्येण


विरचितम्


श्रीतञ्जापुरसन्निकृष्टपञ्चनदस्थे

श्रीनिवासमुद्रणालये

मुद्रितम् ।

---

मूल्यम्] 1933 [रू १-८-०

# भूमिका ॥



अस्य मूलस्येशावास्योपनिषद्भाष्यस्य प्रबन्धरत्नस्य प्रणेतारः कवितार्किककेसरिणस्सर्वतन्त्रस्वतन्त्राः श्रीमद्वेदान्तदेशिकाः श्रीभगवद्रामानुजसिद्धान्तानुयायिनामुत्तरकलाना (वडकलै)मिव दक्षिणकलाना(तेङ्गलै)मप्याचार्या इति नेदमपह्नवार्हम्। आह चाभियुक्तमणिः प्रतिवादिभयङ्करसूरिरात्मकृते श्रीमद्वेदान्तदेशिकसप्ततिरत्नमालिकास्तोत्रे—

"कर्माद्युपाया इह केचन स्युः केचिच्च लक्ष्मीरमणाङ्घ्र्युपायाः।
श्रीमद्यतीन्द्रप्रियवेङ्कटेशगुर्वङ्घ्र्युपाया वयमेव धन्याः ॥"

इति। स एव च तदातन्या साक्षाद्दृष्टश्रीमद्वेदान्तदेशिकवैभवः 'श्रीमद्यतिराजधुर्यश्रीमद्वेदान्तदेशिकपदपद्मविमुखाः काममदलोभशठतादिरहिता अपि नीतिधृतिशान्तिमातिदान्तिसहिता अपि अवलोकनतिमाननुतियाह्यविषया' इत्याचक्षाणः—

'गुरौ वादिहंसाम्बुदाचार्यशिष्ये
जना भक्तिहीना यतीन्द्राप्रियाःस्युः।
यतीन्द्राप्रिया विष्णुकारुण्यदूराः
कुतो मुक्तिवार्ता हि तादृग्विधानां॥'

इति विस्पष्टं ब्रवीति। अत एवास्य महात्मनः प्रतिवादिभयङ्करसूरेरन्ववाये लब्धजन्मानोऽन्ये च दक्षिणकलाः साम्प्रतमपि श्रीमन्तं वेदान्तदेशिकमिममाराधयन्ति गुरुपरम्परामध्यवर्तित्वेन मानयन्ति च। वदन्ति च केचिद्दक्षिणकलाः "उत्तरकलानामसदाचार्यभूताः श्रीमद्रम्यजामातृयोगिनः श्रीमन्तो लोकाचार्याश्च नाचार्या इति तदालयाभिगमनसत्कारादि न तैः क्रियत इति युक्तमेतत्। अस्माभिस्तु स्वाचार्याः श्रीमद्वेदान्तदेशिकास्तदालयाभिगमनप्रणमनपणायनादिना तैरिव सोत्साहं कथङ्कारं न सत्क्रियेरन्" इति।

तद्यदि नाम तेषां लोकाचार्याणां चाशये क्वचिद्विरोधो लक्ष्यते, तर्हि कथमप्यैकरस्यसम्पादनेन पण्डितकृत्येनान्तरक्षोभशमनं युक्तम् । न पुनर्भेदं प्रकल्प्य परिपोष्य कथमपि द्वैधविधानं युज्यते । अशक्यं चेदाशये कस्मिंश्चिद्यथारुचि परिगृहीते स्वयं तिष्ठेयुः, न पुनराशयान्तरखण्डनसंरम्भसमुपनतेनान्यतराचार्यप्रभावगोपनदूषणारोपणवाग्जालेन स्वयं प्रत्यवेयुः । तथा च विरुद्धाशयविषय एवैवं यदि वर्तितव्यम् , तर्हि विरोधवैदेशिकेष्वंशेषु वाक्ययोजनाभेदमात्रमप्यसोढ्वा स्वाभिमतयोजनान्तरप्रदर्शनमात्रेणानुपरम्य ऐदम्पर्येण तद्दूषणप्रणयनं क्रियते प्रत्यवायायेति सहृदयाः पश्यन्तु ।

एवमाचार्यापराधविधुरे पथि वर्तितुकामेष्वाधुनिकेष्वपि महात्मसूत्तरदक्षिणकलेषु, श्रीपद्पुरस्थितपूर्वः शान्तिदान्तिसमृद्धो बहुशास्त्रज्ञो दक्षिणोत्तरदेशप्रसिद्धः पुरुषो श्रीरङ्गाचार्यो यत् सर्वाचार्यस्यास्य कृतिमीशावास्योपनिषद्भाष्यमिदमास्थया मुक्तकण्ठमकाण्डे खण्डयितुमध्यवसाय किमप्यलिखत् , तत् सत्यमाचार्यदेवतानामपराधभीतानां दक्षिणकलानामप्यसम्मतमुपेक्षापदं जुगुप्सनीयं वेति सुधियः प्रतियन्ति । इदं हि भाष्यं दक्षिणकलमहात्मनैव महाचार्येणाचार्यपादपद्मारविन्दपरायणेन शतदूषणीव्याख्यात्रा स्वकृतायां श्रीमद्वेदान्तदेशिकवैभवप्रकाशिकायां

'तत्त्वालोकनसाधनं तनुभृतां सन्नीतिसिद्धाञ्जनं
यश्चक्रे कविवादिपञ्चवदनस्तं वेदचूडागुरुम् ।
ये केचिन्मनुजा भजन्ति भुवने तेषामहं धीमतां
वीटीचेट इति प्रहृष्टमनसा वीथीषु संघुष्यताम् ॥"

इति घोषितवता—

'हृदयङ्गमा बुधानामीशावास्यत्रयीशिरोव्याख्या ।
विहिता येन भजे तं वेङ्कटनाथं विपश्चितां प्रवरम् ॥

इति प्रशंसितम् । केचिदाहुः—अत एवैतादृशग्रन्थखण्डनाभिनिवेशेन कथंचिद्विद्वेषाभिवर्धनश्रद्धया, श्रीमद्वेदान्तदेशिकः स्वगुरुर्मा

भूदिति मन्वानः तं गुरुपरम्पराघटकमननुसन्धाय गुरुमुखादध्येतु-मपारयन् श्रीभाष्यादिकं स्वयमेवानाश्रित्याचार्यमवलोकितवानयं श्रीरङ्गाचार्यसूरिरिति ।

किमनया कथया । सर्वथैवं परामर्शकुशलाः सर्वेऽपि दाक्षिणकला उत्तरकलाश्चेदृशमनादृत्याचार्यपादभाष्यमेवाद्रियन्त इति स्थितमेव । अथाऽपि पामराणामभिमानवशेन अनुपपन्नम्, अयुक्तम् केवलकुतर्कमूलमित्याद्युक्तिमात्रेण खण्डितत्वाभिसन्धि स्थितमपाकर्तुमपामराणामप्याचार्यपादभाष्यस्याणुमात्रे ऽप्यशक्यखण्डनत्वाध्यवसायं द्रढयितुं चात्र व्याख्याने व्यापृतमनेन दासेनेति मात्सर्यमुत्सार्य सर्वेऽपि सहृदयाः साधु सम्मन्यन्ताम् । एवं प्रागेव सप्तभ्यो वत्सरेभ्यो व्याख्यानं विरचितवता मया पश्चात् तुरीये संवत्सरे न्यूनाधिकांशविमर्शेनावापोद्वापयोः कर्तव्यतामभिसन्धायेत्थमिदं पुनः सृष्टं सांप्रतं प्रकाशं प्राप्नोति ।

इति वात्स्यचक्रवर्ती व्याख्याता चक्रवर्तिकृतिसूनुः ।
विनतः सतो विनीतो व्यजिज्ञपद्वीरराघवो नाम ॥

---

# शोधनिका ॥



अस्य ग्रन्थस्य न केवलं मुद्रणभरम्, किं तु सुहृदि मयि सहज-सौहार्दमात्रेण शोधनिकाशोधनपरिष्करणभरमपि स्वयमूढ्वा सादरं साधु मुद्रितवतां वैदुष्यपक्षपातिनां विद्वद्वरिष्ठानामुद्यानपत्रिकासम्पादकानां प्राच्यविद्येश्वराणां मीमांसार्णवानां श्रीमतां श्रीशैलताताचार्यशिरोमणीनां सविधे कृतज्ञतां सुबहु वहता मातृकांशमुखसमापतितामशुद्धिमपाकर्तुमिदं शोधनं प्रकाश्यते ॥

---

| पुटः | पंक्तिः | | पुटः | पंक्तिः | |
|---|---|---|---|---|---|
| १ | १८ | प्रगुणिते | १८ | २४ | ष्वविनियोजन |
| ३ | ९ | विशुद्ध | १९ | २ | अनुभवजननयो- |
| ८ | ५ | सर्वावास्य | ” | ११ | साधनमनर्थ [ग्य |
| १ | १५ | विश्वम्पदेन | ” | १६ | यद्वा तेनेति |
| ९ | १७ | विद्ययाऽमृत | २० | २ | परोऽयं |
| १० | १७ | परमसुहृदीति | ” | ४ | बोधनायैवं निर्देश |
| ११ | १९ | ये के चास्मात् | २२ | १२ | परवशम्, अमु |
| १२ | २३ | शङ्क्यम् | २३ | १५ | र्थकत्वे |
| १४ | २० | ण्यत्प्र | २६ | २३ | एवम्पदस्य |
| १५ | ४ | मलीमसस्य | २७ | १ | एवम्पदतात्पर्य |
| १६ | ४ | तावत्सम्बन्ध | ” | १२ | (विद्याङ्गं कर्मप- |
| ” | १५ | न्निर्वाहः | | | रित्यजेदित्यर्थः) |
| १७ | २४ | अनन्तरभागेनेति | २९ | ९ | पूर्वपक्षसूत्रम्। |

| | | | | | |
|---|---|---|---|---|---|
| ३३ | १४ | गृहस्थकर्माग्रहण | ३९ | १ | पुत्रफलेन पुरुषं |
| ३५ | १८ | त्व निगूढा | ४० | २४ | लक्षितत्वस्याप्यु- |
| ,, | २३ | पद्यते | ४३ | १९ | दात्महन [क्त |
| ३८ | २४ | न्यायसिद्धतायाः | | | |
| ४४ | २४ | त्वपर्यालोचनया वा देहविशिष्टात्महननरूपार्थविवक्षायां देहवियोजनरूपार्थस्यापि ग्रहणसम्भवादसत्कल्पतानयन-रूपविशेष्यभूतात्मस्वरूपहननपरत्वस्यैव विशेषणांशहन-नात्मकदेहपातप्रयो- | | | |
| ४५ | १४ | भावयन्ति । अयं भावः—अज्ञानस्य विपरीतानुष्ठान-द्वारैवान्धतमसप्रापकत्वात् ज्ञानानुष्ठानान्यथाभावयोरेकत-रोक्तावन्यतरस्यार्थतः सिद्धिः पक्षद्वयेऽप्यस्ति । परं त्वत्र पूर्वं स्वरूपपरत्वेनैव व्याख्याततया देहपातरूपार्थस्य वा-च्यवृत्त्याऽनुक्ततया तस्य लब्धत्वं पातकवर्गस्यालब्धत्वं च सिद्धं कृत्वा ग्रन्थप्रवृत्तिर्न युज्यते । अतः पक्षद्वयमे-वात्र । द्वितीयपक्षे आत्मपदं देहपरम् । घात एव पातो ऽभूत् । एवं च देहघातमात्रस्योक्ततया पातकान्तरमु-पलक्षणीयमिति । परे तु देहपातो नामाज्ञानायत्तो देह-सम्बन्धः तन्मूलको यः पातकवर्गस्तदुपलक्षणमिदमित्यर्थं वर्णयन्ति । अनन्दा | | | |
| ४६ | १८ | प्रधानभूतमि | ५४ | १६ | तरपरिमाण |
| ,, | २० | विग्रहसंबन्धस्यैव | ६० | १३ | पदार्थप्रतिमप्रमा |
| ५२ | १८ | मतान्तर्वर्ति | ६२ | ९ | अन्यथैव [ण |
| ६३ | १ | अस्तु वा एकडोलागतपुरुषद्वयन्यायेन जीवेन सह हृदये ऽवस्थानं परस्यात्र प्रतिपाद्यत इति भ्रमापनोदनाय स्पष्ट-प्रतिपत्तये | | | |

| | | | | | |
|---|---|---|---|---|---|
| ६५ | ११ | नान्तरवयववत्त्व- | ७१ | ११ | तिव्याप्त्यभावेन |
| ६७ | १२ | नवसरत्वात् [रूपं | ७२ | १४ | शब्दार्थाविधाना |
| ६८ | १७ | जगदनुपादानत्वा | ७६ | ३ | त्वेनानवयवस्य |
| ६९ | ३ | यदधिकरणं | ७९ | २ | एवेदं श्रुत्यनुगुणः |
| ,, | १० | पदार्थस्य | ८० | १२ | परमात्मनि सत्त्वं |
| ७० | ३ | न सावयवत्व | | | [महा |

८६ १६ जाघटीति व्यभिचारादिति प्रत्यक्त्वं न सिद्ध्येत् । ननु कथं न सिद्ध्यति । एकैकस्याप्यवयवस्यावयवान्तरग्रा-ह्यत्वेऽपि स्वयमपि स्वस्मै भासमानत्वेन प्रत्यक्त्वाक्षतेरि-ति चेदुच्यते । अत्र हि भाष्ये प्रत्यक्त्वेन हेतुनाऽऽत्मनो ऽहमर्थत्वं प्रसाध्य, अहमर्थत्वानङ्गीकारे प्रत्यक्त्वमेव न सिद्ध्येत् । अहम्बुद्ध्या हीदम्बुद्ध्यवसेयपराक्त्वविलक्षणं प्रत्यक्त्वमवगम्यत इति, अहम्बुद्ध्या परागर्थात्प्रत्यगर्थो हि भिद्यत इत्यनेनोक्तम् । एवं च सर्वत्रात्मसु प्रत्य-क्त्वाङ्गीकारे सर्वेषामात्मनामविशेषादेकैकेनाप्यहम्बुद्ध्या गृह्यमाणत्वमस्त्वित्याशङ्कायां यो यन्निष्ठाहम्बुद्ध्या गृह्य-ते, स तं प्रति प्रत्यक् । एकनिष्ठाहम्बुद्ध्या चान्येषाम-ग्रहणान्न तेषां तं प्रति प्रत्यक्त्वम् । एवं प्रत्यात्ममिति वक्तव्यम् । ततश्च तन्निष्ठाहम्बुद्धिविषयत्वं तं प्रति प्रत्यक्त्वसाधकमित्युक्तं भवति । तं प्रति प्रत्यक्त्वं च तन्निष्ठं तद्विषयप्रकाशफलित्वमेव । इत्थं च प्रकृते तच्छ-ब्देनैकावयवग्रहणे तन्निष्ठाहम्बुद्धिविषयत्वस्यावयवान्तरे-ष्वपि सत्त्वात्तत्र च पूर्वगृहीततच्छब्दार्थभूतावयवनिष्ठ-प्रकाशफलित्वाभावाद्व्यभिचार इति तस्मिन्नवयवे तं प्रति प्रत्यक्त्वं न सिद्ध्येत् । एवं सर्वत्र । तथा च तं प्रति

प्रतीच एव तदहम्बुद्धिविषयत्वस्याङ्गीकार्यतया सङ्घात-
विषयकप्रत्ययस्याहमित्याकारकत्वं न सम्भवतीति । यद्येवं-

| | | | | | |
|---|---|---|---|---|---|
| ८७ | ९ | मानां शक्तिं प्रति | ९२ | ६ | प्रमाणादवर्जिग- |
| ८८ | ७ | अपरश्च भूम्यां | | | [मिष्यते |
| ,, | १० | पृथग्भूय | ९६ | २ | सर्वभूतेषु |
| | | | ९७ | ७ | द्रढयन्, त |

१०० १७ न्धविशेष इति प्रकृते वाच्यार्थ एव विधान्तरेणोच्यत
इति । एवं सम्बन्धविशेषस्य तत्त्वेनैकत्वशब्दार्थत्वमन्य-
त्वान्यादृशसम्बन्धविवक्षया प्रयोगदर्शनान्नायुक्तमित्याशये-
नाह प्रयुज्यते हीति ।

| | | | | | |
|---|---|---|---|---|---|
| ,, | २० | जहीत | १०३ | २४ | वर्गस्यते |
| १०२ | ४ | नारकं | १०४ | ११ | वर्गतौ समुच्चे |
| ,, | ९ | तमसादधिकं | ,, | १४ | त्यन्धतमसप्र |

१०८ २५ रेभ्योऽश्रौष्मेत्यर्थो वर्णनीय इति स्वारसिकमिति शब्दस्य
कर्मपरत्वं त्याज्यम् । यद्वाऽन्वययोग्यपदसत्त्वे षष्ठ्या आ-
ख्यातान्वयो न भवति । इतिस्त्वयोग्य इति कर्मपरत्वे
ऽपि न दोषः । तदत्र शुश्रुमेति श्रवणस्य वस्तुतो नि-
यमपूर्वकग्रहणरूपत्वात् 'आख्यातोपयोगे' इति सूत्रेण
नटवैलक्षण्येन प्रकृते पञ्चम्या युक्तत्वेऽपि तदविवक्षया
षष्ठीनिर्वाहः कार्य

१०९ १२ वृत्तिरङ्गकर्मविषय

१११ २२ रणं न स्यात् । ध्वंसस्य पश्चात्कालिकतया तद्धेतुकमृत्यु-
तरणस्य प्राग्दुर्वचत्वात् । प्रागभावपक्षेऽपि दुःखजन्म-
प्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये पूर्वपूर्वापाय इव
प्रागभावे सति मृत्युतरणमित्युक्तौ मिथ्याज्ञानादिकाले

दोषादिरिव सम्भूतिकाले मृत्युरेव हि स्यादिति । न च तरणमलध्वंसरूपमिति वाच्यम् । अथापि सर्वथा प्राग-भावस्यानादितया मृत्योरेवाप्रसक्तौ कुतस्तत्तरणमिति । एवञ्च तदप्रसक्त्या सर्वदाऽमृतप्राप्तिरिति सम्भूतेरमृतप्रा-प्तिहेतुत्वं न स्यात् । न च कारणान्तरप्रतीक्षया ततो वि-लम्ब्य मृत्युध्वंस इति वाच्यम् । तथा सति तदेव कार-णं मुख्यमिति किमेतत्प्रागभावकीर्तनेन ? न च ध्वंसप्रा-गभावान्यतरोपासनात् तत्फलमिति युक्तम् । असम्बन्धे-नान्योपासनेनान्योत्पत्तेरयोगादिति भावः ।

| | | |
|---|---|---|
| ११६ | १० | द्वितीयमन्त्रे वक्तव्यमिति भवदभिमतम् |
| १२६ | ३ | पदेशः |
| ,, | ९ | तदा साधारण्य |
| ,, | १४ | निवेशितः । अथ वा 'तत्र वर्तमानव्यपदेश उत्तरवा-क्यवत्तात्कालिकानुवादः । सदा पश्यामीति वा निरुपा-धिकशेषत्वानुगुणोक्तिः । प्रार्थनाप्रकरणानुरोधे तु व्यत्य-येन पश्येयमिति लिङर्थो ग्राह्यः । ते इत्यस्य पुनरुक्तिस्त-दसाधरण्यज्ञापनार्थेति पाठोऽस्तु । |

| | | | | | |
|---|---|---|---|---|---|
| १२९ | १० | प्रथमं | १४० | ११ | सप्तम्यवगतत्वेन |
| १३१ | ४ | द्वितीयम् | १४१ | २३ | वेत् । |
| १३२ | ३ | तृतीयम् | १४३ | ४ | तत्राव्याहतत्वेन |
| ,, | ,, | देहात्मविवेक[परः | १४८ | १२ | थक्सिद्धिसम्बन्धेन |
| ,, | २३ | शब्द एव विशिष्ट- | ,, | १७ | विशिष्टवाचिनः । एवं |
| १३४ | १६ | पवानित्यादौ रूपे | १५४ | २१ | वैलक्षण्यं |
| १३६ | १३ | न्तर्यामित्वलक्षण | | | |



॥ श्रीः ॥

श्रीमन्निगमान्तमहादेशिकविरचितं

# ईशावास्योपनिषद्भाष्यम् ॥



श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥



येनावास्यमिदं सर्वं चेतनाचेतनात्मकम् ।
विशुद्धसद्गुणौघं तं वासुदेवमुपास्महे ॥ १ ॥

---

## आचार्यभाष्यतात्पर्यम् ॥



अनुग्रहमयीं रमामुरसि धारयन् सादरं
विशिष्टजनरक्षणव्रत इमं वृषाद्रिं श्रितः ।
स्वकं चरणमर्थिनां शरणमेष सन्दर्शयन्
दयादिगुणशेवधिर्दिशतु देवदेवः श्रियम् ॥ १ ॥

स कविकथकसिंहः सर्वतन्त्रस्वतन्त्रो
निरुपधिनिगमान्ताचार्यनामप्रसिद्धः ।
अपरतुरगवक्त्रः सन्निधानं दधानः
सदयमिह मयि स्वव्याकृतिं व्याकरोतु ॥ २ ॥

यतीश्वरविशोधिते पथि पुरातने यः प्रजा(स्सत)
स्त्रयीशिखरदेशिकप्रगुणितं परं वर्तयन् ।

रराज विजयध्वजप्रथितशिष्यवृन्दार्चितो
मुनिः स हृदि मेऽनिशं वसतु रङ्गरामानुजः ॥ ३ ॥
नमति कुमतिगर्वक्षेपिगम्भीरशुद्ध-
श्रवणमधुरसूक्तिस्यन्दिवक्त्रारविन्दम् ।
महितगुणमयं तं माधवध्यानमग्नं
निगमशिखररामानुदयं योगिनाथम् ॥ ४ ॥
प्रज्ञाचारपरिष्क्रियां यमिवरश्रीरङ्गरामानुज-
प्रख्यां कामपि देवतां प्रणिपतन् वैराग्यवारांनिधिम् ।
तत्सानुग्रहसम्प्रदिष्टमखिलं त्रय्यन्तगूढं परं
तत्त्वार्थं हृदये विचिन्त्य यतते सन्तो दयन्तामिह ॥ ५ ॥
नैषा निगमान्तगुरोर्गभीरसूक्त्यर्थविस्तराय कृतिः ।
इह दोषकल्पनोद्यमधन्यम्मन्योक्तिदूषणाय पुनः ॥ ६ ॥

अथ श्रीवेङ्कटशैलविहरणपरायणपरमपुरुषपद्मानिवासपरिचरणप्रयुक्तविबुधवैरिवरूथिनीविलासिघण्टावतारः श्रीवेङ्कटेशनामधेयो विंशतिवत्सरविशेषश्रुतविशिष्टविद्यो निजसहजमतिमहिमनिरीक्षणप्रहृष्टगुरुवरोपदिष्टविशिष्टमन्त्रसिद्धिबलसमध्यक्षितवैनतेयवदनसरसिजमधुरसायितमहितमन्त्रमधुरिमास्वादपाटिमपरिकर्मितप्रियतमोपासनप्रसन्नगुणसदनहयवदनसकलसमयसमध्यासितशुभजिह्वाग्रसिंहासनस्समस्तकविकथकसन्ततसमभ्यर्चितचरणारविन्दः सदसि रहसि च समस्तैरपि सहृदयश्लाघितशुभोदन्तो वेदान्ताचार्यः कर्मकांडगतत्वेऽपि ब्रह्मैकप्रवणामष्टादशमन्त्रात्मकत्वेनाल्पिष्ठत्वेऽप्यशेषार्थगर्भामात्मशरीरभावरूपप्रतितन्त्रोपक्रमां कर्मसमुच्चितविद्यायोगविबोधिनीं चिदचिदीश्वरतत्त्वत्रयविवेचनीं यथाभूतप्राकृताप्राकृतदेशदिव्यमङ्गलविग्रहार्चिरादिपथप्रमुखपदार्थप्रदर्शिनीमीशावास्योपनिषदं विद्वदन्तेवासिजनानुजिघृक्षया व्याचिख्यासुरिष्टदेवतोपासनरूपं मङ्गलमाचरति येनेति । अथ प्रकृतोप-

**सर्वेशानः सहजमहिमा सर्वभूतान्तरात्मा**
**सर्वान् दोषान् स्वयमतिपतन् सर्वविद्यैकवेद्यः ।**
**कर्माध्यक्षः कलुषशमनः कोऽपि मुक्तोपभोग्यः**
**सिद्धोपायः स्फुरति पुरुषो वाजिनां संहितान्ते ॥ २ ॥**

**ईशावास्यमिदं सर्वमित्यादि यदनूच्यते ।**
**शिष्यं प्रति गुरोरेतद्ब्रह्मविद्यानुशासनम् ॥ ३ ॥**

**संहितोदाहृतं सर्वं विनियोगपृथक्त्वतः ।**
**विद्यार्थं स्यादिति व्यङ्क्तुं निबन्धोऽस्य तदन्ततः ॥ ४ ॥**

---

निषदुक्ताकारानुसन्धानेन शुद्धसद्गुणौघत्वं विवृणोति **सर्वेशान** इति । **वाजिनां** वाजसनेयिनां शुक्लयजुर्वेदिनाम् । ननु वक्तुः श्रोतुश्च कस्यचिदनिर्देशेन भुञ्जीथा इत्येवं मध्यमपुरुषादिकं कथं घटताम् । उपदिश्यमानस्यार्थस्य सर्वपुरुषसाधारण्यादपि यजेत स्वर्गकाम इत्यादाविव प्रथमपुरुष एव हि निर्देष्टव्यः तत्राह **शिष्यं प्रति गुरो**रिति । जनकादिभ्यो याज्ञवल्क्यादिभिर्गुरुभिरनुशासनस्योपनिषत्सु बहुलमुपलम्भेन स प्रकार इहादृत इति मन्तव्यम् । अतः सन्निहितस्वस्वगुरोर्द्रष्टुर्दधीच आथर्वणस्यर्षेः प्रथमगुरोः परमपुरुषस्य वा ग्रहणम् । अतश्च सर्वपुरुषसाधारण्यमप्यक्षतम् । एतत्प्रकारावलम्बनेन च 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्' इत्यर्थो दिदर्शयिषित इति भावः । ननु ब्रह्मविद्यानुशासनरूपत्वे ज्ञानकाण्डान्तर्गतत्वमावश्यकम् न तु कर्मकाण्डसंहितान्तर्भावो युज्यते । अतोऽन्यादृश एव कर्मानुबन्धी कश्चिदर्थो विमृश्य इत्यत्राह **संहिते**ति । ब्रह्मविद्यानुशासनरूपस्याप्यर्थविशेषव्यञ्जनाय कर्मकाण्डान्तर्भावो युज्यत एव । अर्थश्चायम्—ये खल्विह यागहोमादयः संहितायामुपदिष्टाः ते सर्वे यथा विशिष्य तत्तत्फले विनियोगदर्शनेन तदर्था भवन्ति, तथा कुर्वन्नेवेहेत्यादिना वचनान्तरेण ब्रह्मविद्यायामपि विनियुज्यमानास्तदर्थाश्च भवन्तीति । इति व्यङ्-

ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥

---

**तत्र प्रथममचिद्विकाराधिष्ठितस्य स्वतन्त्रात्मभ्रमादिपरिजिहीर्षया सर्वस्य परमपुरुषायत्तस्वरूपस्थितिप्रवृत्तित्वमभिप्रेत्याह—ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगदिति । इदं तत्तत्प्रमाणसिद्धमीश्वरव्यतिरिक्तं चिदचिदात्मकम् । ईशा 'ज्ञाज्ञौ द्वावजावीशानीशा'वित्यादिषु जीवादत्यन्तविलक्षणतया प्रख्यातेन सर्वनियन्त्रा पुरुषोत्तमेन । वास्यं व्याप्यमित्यर्थः, सर्वाधारे स्वस्मिन् स्वेन वासनीयं वा । स्मर्यते हि—**

**'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।**
**ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥' इति ।**

**जगत्यामिति लोकान्तराणामुपलक्षणम् । जगत् स्वरूपतो धर्मतो**

---

क्तुमिति। इतिशब्दः प्रकारवचनः । अतः सर्वकर्मसमाराध्यत्वं परमात्मन एवेति व्यङ्क्तुमपि संहितायां निबन्ध इत्युक्तं भवति ।

यत्त्वत्र पञ्चाशदध्यायात्मकशुक्लयजुर्वेदसंहितायां पञ्चाशोऽयमध्याय ईशावास्योपनिषत्संज्ञ इत्युक्तम् । तत् कथं युज्यत इति सन्तो विमृशन्तु । यतः 'चत्वारिंशे त्विहाध्याये परमात्मनिरूपण'मित्यन्यत्रोक्तम् । अन्योऽप्याह 'चित्तशुद्धिश्च स्ववर्णाश्रमोचितकर्माचरणेनेति प्रथमं कर्मकाण्डमेकोनचत्वारिंशदध्यायैःप्रतिपादितम् । अथेदानीं ज्ञानकाण्डमेतेन चरमेणाध्यायेनारभ्यत' इति । शुक्ले यजुष्यधीतिनोऽपि चत्वारिंशदध्यायात्मिकैवेयं संहिता । तत्रायं चत्वारिंशोऽन्तिम इत्येव ब्रुवते । न तु कथमपि पञ्चाश इति ।

पूर्वार्धमवतारयति तत्रेति । चेतनस्येत्यभिष्ठितविशेष्यमर्थसिद्धम् ।

वाऽन्यथात्वं गच्छतु भोग्यभोक्तृरूपं वस्तुजातम् । अतदात्मकं किंचिदपि नास्तीति द्रढयितुं यत्किञ्चेति विशेष्यते ।

'इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञमेव च ॥' इत्युपबृंहितम् ।

ननु 'रूढिर्योगमपहरती'ति न्यायादीशोऽत्र रुद्रः स्यात् । सर्वाद्युपपदाभावाच्च । मैवम् । कारणविषयाकाशप्राणादिशब्दवत् रूढेरिह बाधितत्वात् । 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः,' 'अनपहतपाप्माऽहमास्मि नामानि मे धेही'त्यादिभिरसर्वकारणत्वेन

---

आदिना परमपुरुषेतरपारतन्त्र्यभ्रमो ग्राह्यः । इति न्यायादिति । योगाधीनार्थोपस्थितिर्हि यौगिकपदेऽवयवविभजनेन प्रत्यवयवशक्तिस्मरणेन भवति । यथा पाचक इत्यत्र 'पाकं तु पचिरेवाह कर्तारं प्रत्ययोऽप्यक' इत्येवम् । रूढ्यर्थीनार्थोपस्थितिस्तु अवयवविभागमन्तरेण समुदायश्रवणमात्रेण भवतीति शीघ्रकार्यकरत्वात् रूढिर्योगमपहरति । अत एव 'रथकारोऽग्नीनादधीते'त्यत्र जातिविशेष एव रथकार इति रथकाराधिकरणे स्थितमिति । ईशोऽत्रेति । नायमीट्शब्दः, किंत्वीशशब्दः । ईशावास्यमित्येकं पदमीशेनाऽऽवास्यमिति तृतीयातत्पुरुषवृत्तमिति शङ्कितुराशयः । सर्वादीति । ईशः सर्वस्य जगत इत्यादौ सर्वजगदाद्युपपदसद्भावेन षष्ठ्यर्थस्य धात्वर्थ ईशन एवान्वयस्य वक्तव्यतया रूढ्यर्थरुद्रविवक्षणासम्भवेन रूढिपरित्याग आवश्यकः । न तथेहेति भावः । एकपदत्वमन्वारुह्यैव परिहरति मैवमिति । अन्वयासम्भवादेव हि सर्वाद्युपपदस्थले रूढिबाधः । सोऽत्राप्यविशिष्ट इति भावः । ननु 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ती'त्यादौ ह वा इति जगत्कारणस्य प्रसिद्धवन्निर्देशेनानुवादत्वावगमात् पुरोवादभूते 'सदेव सोम्येद'मित्यादौ तद्विलक्षणस्य जगत्कारणत्वं निर्णीतमिति तदनुसारेणाकाशादिशब्दस्यान्यथा नयनम् । न त्विहानुवादत्वगमकं कि-

**कर्मवश्यत्वेन च सम्प्रतिपन्ने रुद्रे सर्वावास्यत्वसर्वाधारत्वादेरसम्भवात् । तद्वत्तया प्रसिद्धेऽनवच्छिन्नैश्वर्ये सर्वेश्वरे यौगिकोऽयं शब्दः प्रत्येतव्यः । यद्यपि प्रसिद्धवन्निर्देशाभावादाकाशादिवाक्यवैषम्यम् तथाऽप्यैन्द्रीन्यायाद्विरुद्धार्थविषयतयैव रूढिभङ्गोपपत्तिः । न चात्र ' सर्वत्वमाधिकारिक ' मिति न्यायः, सङ्कोचाद्दृष्टेः । प्रवाहेश्च-**

---

श्चिदस्ति । येनाकाशादिशब्दस्य दृष्टान्तत्वं स्यादिति शङ्कते **यद्यपीति** । रूढिबाधमात्रे दृष्टान्तः । न हेत्वैक्यमपि विवक्षितम् । वस्तुतोऽस्मदुक्तस्तत्र दृष्टान्तवाक्येऽप्यक्षत इत्यभिप्रेत्य परिहरति **तथापीति** । **ऐन्द्रीन्यायादिति** । 'कदाचनस्तरीरसि नेन्द्रसश्चसि दाशुषे । उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते' इतीयमैन्द्री ऋक् । अस्या अर्थः— हे इन्द्र, त्वं कदाचिदपि **स्तरी** हिंसको नासि । **दाशुषे** (हविः) दत्तवते (यजमानाय फलप्रदानाय) **उपोपेन्नु** यजमानसमीप एव **सश्चसि** गच्छसि । **भूय इन्नु** पुनरेव च देवस्य ते **दानं** देयं (हविः) **पृच्यते** सम्बध्यते, यजमानेन दीयत इति यावदिति । 'वचनात्त्वयथार्थमैन्द्री स्यादि'त्यधिकरणे (३ २ २) इयमृक् रूढ्यबाधेनेन्द्रप्रतिपादिका सतीन्द्रोपस्थानाङ्गमिति पूर्वपक्षयित्वा 'ऐन्द्र्या गार्हपत्यमुपतिष्ठत' इति श्रुत्या गार्हपत्योपस्थाने विनियुक्तत्वात् तदुपस्थाने चेन्द्रस्यान्वयासम्भवादृग्गतमिन्द्रपदं गौण्याऽन्यया वा कयाऽपि वृत्त्या गार्हपत्यपरम्, न तु चयनानुपयोगीन्द्रपरमिति सिद्धान्तितम् । तन्न्यायादित्यर्थः । **सर्वत्वमाधिकारिकमिति** । पूर्णाहुत्या सर्वान् कामानवाप्नोतीति वाक्यं यदि प्रमाणम्, तर्ह्याधानाङ्गभूतया पूर्णाहुत्यैव सर्वफलसिद्धेरन्यानि कर्माण्यनर्थकानि स्युरिति पूर्वपक्षं प्रतिक्षेप्तुमिदं सूत्रम् (१ २ १) । अस्यायमप्येकोऽर्थः । यथा सर्वमोदनं भुङ्क्त इत्यत्र सर्वशब्दोऽधिकृतापेक्षो न त्रैलोक्यवर्तिनमोदनं गृह्णाति, तथैवायमपि

**रानेकेश्वरपक्षौ तु त्रैकालिकसर्वनिर्वाहकेश्वरप्रतिष्ठापकैः प्रमाणगणैः प्रत्यूढौ । अतः 'पतिं विश्वस्यात्मेश्वरम्' इत्यादिप्रसिद्धानन्याधीनैश्वर्यम् , 'योऽसावसौ पुरुष' इत्यनुवदिष्यमाणम् , ब्रह्मेशानजनकत-**

---

सर्वशब्दोऽग्निकर्माधिकृतफलमात्रग्राही भविष्यतीति । एवं च यथा तत्राधिकृतमात्रविषयकत्वं सर्वशब्दस्येति शङ्कार्थः । सङ्कोचादृष्टेरिति । कथम् ? इत्थम् । तत्र ह्यन्यकर्मानर्थक्यभियाऽग्निकर्मप्रकरणाच्च सङ्कोचो दृष्टः । इह तु न किंचित् प्रमाणम् । प्रत्युत सर्वशब्दः स्वस्वारस्यात् यत्किंचपदस्वारस्याच्चाखिलमपि गृह्णातीति बाधकसद्भावादसङ्कोच एव दृश्यते । ननूपक्रमे ईशपदेन रूढ्या रुद्रवचनाज्जघन्यं सर्वपदं तदनुरोधेन नेयम् । उपक्रमाधिकरणन्यायात् । उच्यते । यद्यपीशशब्दस्य पाठः प्राचीनः, अथाप्यर्थग्रहणवेलायां सर्वशब्दार्थग्रहणमेव प्राथमिकम् । उद्देश्यं गृहीत्वा ह्युपादेयं ग्राह्यम् । इदं सर्वमित्युद्देश्यम् । ईशावास्यमिति च विधेयम् । किञ्च यत्किंच जगत्यां जगत् इत्यर्थ एवादावध्यवसातव्यः । तत्र च सङ्कोचकाभावादशेषग्रहणमिति तदनुरोधेनापि सर्वशब्देनाशेषग्रहणम् । एवञ्च जघन्यतो गृह्यमाणमीशपदमनन्वयात् रूढ्यर्थं विहाय योगार्थे निपतति । न खल्वीशानो भूतभव्यस्येत्यत्र प्रथमश्रुतेशानपदरूढ्यर्थाबाधाय भूतभव्यस्येति षष्ठ्यर्थस्य धात्वर्थेऽन्वयमविवक्षित्वाऽन्यथा नयनं कश्चिदङ्गीकुर्यात् । अपि च सर्वं यत्किञ्चेत्यनेकपदस्वारस्यभङ्गप्रसङ्गादुपरि ब्रह्मतद्विद्याफलादिपरवाक्यजातानुरोधाच्च भूयसान्न्यायेनोपक्रमन्यायस्योपरोध एवेति । प्रवाहेश्वरपक्षो नामैकस्मिन् सर्ग एकः सर्वनिर्वाहकः प्रलयानन्तरभाविनि सर्गान्तरे चान्य इति पक्षः । अनेकेश्वरपक्षश्चैकस्मिन्नेव सर्गे सृष्टिप्रलयादिकार्यभेदेन ब्रह्मरुद्राद्यनेकसमैश्वर्यशालिस्वीकारपक्षः । त्रैकालिकेति प्रवाहपक्षव्युदासाय । सर्वेत्यनेकेश्वरपक्षप्रतिक्षेपाय । स ब्रह्मा स शिव इति

याऽनन्यथासिद्धवाक्यनिर्धारितम्, 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इत्यादिषु सर्वान्तर्यामित्वेन प्रख्यातं, तत एव 'स ब्रह्मा स शिव' इत्यादिषु विभूतिभूतानां ब्रह्मशिवेन्द्रादीनां 'विश्वमेवेदं पुरुषः' इत्यत्र विश्वस्येव विशेष्यतयोक्तं नारायणमेव सर्वस्य वास्यमीशं वक्तुमुचितमेतद्वाक्यमित्यलमन्यरूढिप्रसङ्गरहितासमस्तपदाध्ययनानभिज्ञाश्रोत्रियचोद्योपालम्भेन । एवं मुमुक्षोरीश्वरपारतन्त्र्यबोधमुत्पाद्य वैराग्यभूषितां वृत्तिमुपदिशति-तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनमिति । तेन जगता भोग्यताभ्रमविषयेण त्यक्तेन दोषभूयस्त्वदर्शनात् परित्यक्तेन उपलक्षितः सन् भुञ्जीथाः अप्रतिषिद्धयोगधर्मोपयुक्तदेहधारणमात्रोपयिकं भोग्यवर्गमित्यर्थप्रकरणाभ्यां सिद्ध्यति । यद्वा सर्वावास्यत्वेन

---

किमित्यैक्यमेव नोक्तं स्यादित्यत्राह विश्वमेवेदं पुरुष इत्यत्र विश्वस्येवेति । ऐक्यं चेत् स्वारस्यबुद्ध्या स्वीक्रियते तर्हि विश्वमिति पूर्ववाक्येन चिदचित्प्रपञ्चैक्यं पुरुषस्य सम्मन्तव्यम् । न च जडाभेदो ब्रह्मण इष्टः । तद्वन्मूढाभेदोऽपि न युज्यते । अशक्यं चैकेन विश्वपदेन चिद्विषये ऐक्यमन्यत्रान्यविधत्वं च बोधयितुम् । अतः सर्वत्रैकविध एव निर्वाहो युक्त इति । ये तु जडैक्यमपि स्वीकुर्वन्ति ते निर्विकारत्वादिश्रुतिविरोधेन निराकार्या एवेति । दोषभूयस्त्वेति । ऐश्वर्यफलं हि—

दुःखमूलं दुःखमिश्रं दुःखोदर्कमथास्थिरम् ।
अल्पं देहात्मधीमूलं दायप्राप्तविरोधि च ॥

इति दोषसप्तकदूषितम् । कैवल्ये च यावत्सम्भावितं द्रष्टव्यम् । अर्थप्रकरणाभ्यामिति । अन्यथाऽनुपपत्त्या सर्वत्यागप्रकरणाच्चेत्यर्थः । केवला भोजनान्यथाऽनुपपत्तिर्भोग्यमात्रमाक्षिपेत् । त्यागप्रकरणसहिता तु निरुक्तमिति भावः । यद्वा अर्थःस्ववाक्यस्थ'तेन त्यक्तेने'ति पदान्तरान्वययोग्य-

प्रकृतं निरतिशयभोग्यं वक्ष्यमाणोपायमुखेन भुञ्जीथा इति योज्यम् । कस्यापि बन्धोरबन्धोर्वा धनं मा गृधः माभिकांक्षः । आह च यमः किङ्करं प्रति 'परमसुहृदि' इत्यारभ्य 'शठमतिरुपयाति योऽर्थतृष्णां पुरुषपशुर्न स वासुदेवभक्तः' इति । इदं च धनाशाप्रहाणं परमात्मे-

---

ता ; प्रकरणं पूर्वापरवाक्यजातम् । **वक्ष्यमाणोपायमुखेन भुञ्जीथा** इति । **अत्रेदमवधेयम्**––वक्ष्यमाणोपायेत्युक्त्या विद्यारूप उपाय उपरि विधास्यत इत्यवगम्यते । असूर्या नामेति मन्त्रेऽपि वक्ष्यमाणविद्याया-मित्युक्तम् । एवं च भुञ्जीथा इति धात्वर्थो मोक्षकालिक उपायजन्योऽनुभव इति ज्ञायते । 'यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति,' 'यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानत' इति मन्त्रयोश्च विदुषः साम्प्रतिकप्रयोजनप्रदर्शकत्वमेवोक्तम् , न विद्याविधायकत्वम् । 'अन्धं तम' इत्यत्र तु 'एवं विचित्रशक्तिपरमात्मविषयां कर्माङ्गिकां विद्यामुपदिश्ये'ति भाषितम् । न च मध्ये ब्रह्मगुणबोधकवचनसत्त्वेऽपि विद्याविधायि वचनमस्ति । विद्यां चाविद्यां चेति मन्त्रस्तु केवलं मानान्तरप्राप्तविद्याऽविद्यासमुच्चयतात्पर्यः । अन्यथा तुल्यन्यायेन कुर्वन्नेवेति विहितकर्मविधायकत्वमपि स्वीकर्तव्यं स्यात् । अतो वचनान्तराभावात् विधिश्रवणाच्च भुञ्जीथा इत्येतदेव विद्याविधायकम् । विद्ययाऽमृतमश्नुत इति विद्याफलस्य वक्ष्यमाणत्वाच्च न फलपरम् । अनुष्ठानकालेऽपि प्रीतिरूपापन्नाया विद्याया भोगरूपत्वमविशिष्टम् । तादात्विकभोगस्याप्यनुष्ठीयमानोपायाधीनत्वाद्भोगध्यानयोरंशतो भेदमादायोपायमुखेनेत्युक्तिः । अतो भुज्यर्थो भक्त्यपरपर्यायं भोगरूपमुपासनम् । उपासीतेत्याद्यप्रयोगेण भुञ्जीथा इति प्रयोगश्च परस्य कल्याणमयत्वमहानन्दत्वादिव्यञ्जनार्थः । उपायस्य वक्ष्यमाणत्वकथनं च सामान्यतो ब्रह्मविद्याया इहोपदेशेऽपि तदपेक्षितगुणितकर्तव्यतायाः उपरि वक्ष्यमाणतया यथाविधस्योपायत्वं तथाविधस्य तावत्परिकरसम्पन्नस्य वक्ष्यमाणत्वमेवेत्य-

तत्कृत्स्नविषयवैराग्योपलक्षणम् । स्मर्यते हि—

'परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि' इति ॥ १ ॥

---

भिप्रायेण । एवं चायं मन्त्रो विद्याविधायकः, अनन्तरश्च तदङ्गकर्मविधायक इति रमणीयमित्येको निर्वाहः । अन्यस्तु—भुजेरुपासनार्थत्वं क्लिष्टम् । सकलेतरभोगपरित्यागेन परमात्मभोग इह कथ्यमानः फलरूप एव स्वरसप्रतीतः । न च फलस्य विध्यसम्भवः । अप्रवृत्तप्रवर्तनरूपविधेस्तत्रासम्भवेऽपि अज्ञातज्ञापनरूपविधानस्य सम्भवेन भुञ्जीथा इत्यस्योपपत्तेः । वक्ष्यमाणेत्यादिसूक्तिश्चाक्लेशेनास्मिन् पक्षे निरूढा । विद्याविधानं तु यस्तु सर्वाणीत्यत्र । अनुवादरूपतया प्रतीतावप्यप्राप्तत्वेन विधिकल्पनं नायुक्तम् । उपासनार्थकपदसत्त्वात् । सांप्रतिकप्रयोजनप्रदर्शकत्वोक्तिर्मुमुक्षुप्रशंसार्थत्वोक्तिश्चोत्तरार्धाभिप्रायेण । शास्त्रजन्यज्ञानपरत्वं चानुपश्यतीत्यस्य यद्यप्युक्तम्, अथापि विद्याविधायिवचनान्तराभावादेव तत्पक्षत्यागेनोपासनपरत्वोक्तिः । मोक्षोपायोपदेशप्रकरणेष्वित्यादिना चार्थान्तरविवक्षणायोगो भावितः । 'तद्विदः सांप्रतिकं प्रयोजनमाह' त्यस्य च तद्विद्यां विधाय तज्जन्यं सांप्रतिकं फलमाहेति विशिष्टार्थपरत्वम् । अतोऽन्यत्रैव विद्याविधानं न प्रथममन्त्रे । किं त्वैहिकामुष्मिकतदनुभवमालाभिधानमिति । परमसुहृदीति । परमात्मनीति । 'सर्वैषणाविनिर्मुक्तः स भैक्षं भोक्तुमर्हती' त्युत्तरार्धम् ।

यत्पुनरस्य मन्त्रस्यान्यथा व्याख्यानम्—इदं सर्वं स्वेतरत् कृत्स्नं जगत् ईशा वास्यं वसितुमाच्छादयितुं वस्त्रादिवत् स्वातिशयाधायकतया धारयितुं योग्यम् । वस आच्छादन इत्युक्तमाच्छादनं न तिरोधानप्रयोजकव्यापाररूपमपवारणम्, अपि तु स्वातिशयाधायकतया धारणमेव, वस्त्रं वस्ते इत्यादौ तस्यैव बोधात् । तथा च वस्त्रादिवत् धार्यत्ववाचिवास्य-

शब्देन शेषत्वगर्भितं पारतन्त्र्यमुक्तं भवति । अतो जगत्यां **यत्किञ्च** यत्किञ्चित् जगत् ; इदं द्वितीयान्तं **भुञ्जीथा** इत्यस्य कर्म । यद्वा **ईशा वास्यमिदं सर्व**मिति तत्कर्म । **जगत्यां यत्किञ्च जगदस्ति ईशावास्य-मिदं सर्वं भुञ्जीथा** इत्यन्वयः । **त्यक्तेन** फलममताकर्तृत्वविषयत्रिविधगीतो-क्तत्यागसंस्कृतेन **तेन** तद्वस्तुना स्वस्वामिभावसम्बन्धेनोपलक्षितस्त्वमिति **भु-ञ्जीथा** इत्यनेन कर्तृत्वेनान्वितमिति ;

यदप्याचार्यपादभाषितार्थदूषणम्--वसतेरकर्मकत्वेन ण्यत्प्रत्ययासम्भ-वात् वास्यमित्यस्य व्याप्यार्थकत्वं न युक्तम् । उत्तरवाक्यार्थानुपकारकत्वा-च्चायमर्थो वासयितव्यमित्यर्थश्च न विवक्षितुमर्हः । भुञ्जीथा इत्यस्य कर्माध्या-हारः करणाध्याहारश्च क्लिष्टं कल्पितः । त्यक्तेनेति वैराग्यवशेन स्वरूपत्या-गस्यैव विवक्षिततयोपलक्षणतृतीयाऽपि न घटते । तात्कालिकवैशिष्ट्य-रूपोपलक्षितत्वस्थल एवेत्थंभूतलक्षणतृतीयाविधानात् । यथा--अपि भवान् कमण्डलुना च्छात्रमद्राक्षीदिति ;

तदुभयमनुपपन्नम् । तथा हि—व्याख्यानानुपपत्तिस्तावत्—

भुञ्जीथा इत्यन्तं यथाकथंचिद्वाक्यद्वयम् , न तु वाक्यत्रयमिति ह्य-भिप्रायः । तत्र प्रथमयोजना न युज्यते, यत्किञ्चपदस्य तच्छब्दसापेक्षत्वा-त् । यद्यपि यत्किञ्चित्पदस्य न तच्छब्दसापेक्षत्वनिर्बन्धः; अथापि यत्कि-ञ्च शब्दस्तच्छब्दघटितवाक्यान्तरसापेक्ष एव सर्वत्र दृश्यते । यथा— यः कश्च शब्दो वागेव सा । ये के चास्मत्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति । प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जना इत्येवम् । न च 'तेन त्यक्ते'नेति तच्छब्दस्तत्प्रतिसम्बन्धी, यच्छब्दघटितवाक्यघटकत्वात् । अतः श्रूयमाण-पदानामन्यथा योजितत्वेन तच्छब्दघटितस्य वाक्यान्तरस्य समस्तस्य कल्प-

नीयतया महद्गौरवम् । वाक्यत्रयापत्तिदोषादनिर्मोकश्च । न च 'यत्किञ्च जगत्यां जगत्तेन त्यक्तेन भुञ्जीथा ईशावास्यमिदं सर्व'मिति योजना । तच्छब्दाभावेऽपीदं शब्दस्तत्कार्थकरोऽस्तीति मन्तव्यम् ; तथाऽपि यच्छब्दघटितवाक्य एव तस्यैव तच्छब्देन ग्रहणस्यासमञ्जसस्यापरित्यागात्, एवं सतीदं सर्वमिति कृत्स्नजगद्ग्रहणस्वारस्यभङ्गप्रसङ्गाच्च । इदमित्यस्य यत्किंचपदप्रतिसम्बन्धित्वे हि यत्किंचपदेन भुजिक्रियाकर्मत्वार्हस्य कतिपयमात्रस्य ग्राह्यतया तावत एवेदमित्यनेनापि विवक्षणीयता । न खलु कृत्स्नं जगदेकस्य भोज्यम् । किं चैवमीशावास्यत्वमात्रस्य विधेयत्वापातः ; तेन त्यक्तेनेति त्यागस्य यच्छब्दघटितवाक्यघटकपदगम्यत्वेनोद्देश्यकोट्यन्तर्भावात् । उद्देश्यविशेषणत्वे चाविवक्षैव स्यात् । यथा ग्रहं सम्मार्ष्टीत्यत्र ग्रहगतैकत्वस्य । न चोद्देश्यकोटिनिवेशोऽपि सम्भवति, अप्राप्तत्वात् । मानान्तरप्राप्तं हि तथात्वमर्हति । सति चोद्देश्यान्तर्भावे भवदभीष्टं नष्टम् । त्यागलक्षणबुद्धिविशेषविधानार्थोऽयं मन्त्र इति हि भवत्प्रक्रिया । द्वितीययोजनाऽपि न युक्ता । इदं सर्वमिति हि कृत्स्नजगद्ग्रहणं भवत्पक्षेऽपि । सर्वपदस्वारस्याद्यत्किंचेति वाक्यबलाच्च तथैव स्वीकर्तव्यम् । तथा च तेनेति तच्छब्दोऽपि तावद्वाची । एवं च भुञ्जीथा इत्येकैकस्य कृत्स्नजगद्भोगवर्णनं कृत्स्नेन जगता स्वस्वामिभावसम्बन्धकथनं च कथं घटताम् ? एवमीशावास्यत्वं न विधातुं शक्यते । ईशावास्यत्वात् सर्वं भुञ्जीथा इति हेतुगर्भविशेषणमिति त्वत्रभिप्रेतम् । न ह्यप्रसिद्धस्य हेतुत्वं सम्भवतीति प्रमाणान्तरेण प्रसिद्धिर्वाच्या । तथा चास्य तदुपदेशरूपता व्याहन्यते । न च सोमेन यजेतेत्यादौ यथा सोमविशिष्टयागविधाने सोमरूपविशेषणविधिरर्थात्क्रियते, तथेहापि सकलविशेषणविशिष्टभोगविधाने पश्चादार्थिकविधिना त्यागस्येवेशावास्यत्वस्यापि विधानमिति शक्यम् , भोगस्य रागप्राप्तत्वेनाविधेयत्वात्

प्राप्तभोगोद्देशेन त्यागस्यैव विधेयत्वात् तेन सहेशावास्यत्वस्यापि विधाने वाक्यभेदप्रसङ्गात् । अपि चेशावास्यत्वस्येदंशब्दार्थविशेषणत्वात् तस्य च यत्किंच जगत्यां जगदिति वाक्यबलेनोद्देश्यत्वेनान्वयस्यैव ज्ञातत्वात् तदुद्देशेन त्यागविशिष्टभोगविधानेऽपि नोद्देश्यविशेषणस्य वास्यत्वस्य विधिः सम्भवति । इदमर्थोद्देशेन वास्यत्वस्य विशिष्टभोगस्य च विधावभ्युपगते पुनर्ग्रहोद्देशेनैकत्वसम्मार्गयोर्विधान इव तदवस्थ एव वाक्यभेदः । अतो ब्रह्मविद्योपक्रमे ईशावास्यत्वस्य विधेयत्वमावश्यकमिति भुञ्जीथा इत्यस्य नेदं कर्म भवितुमर्हति । किं चेशावास्यत्वत्यागविशिष्टद्रव्यभोगविधानानन्तरमार्थिकविधिनेशावास्यत्वविधानं तावत् त्यागस्यैवाङ्गतया न भवति । अरुणया गवा क्रीणातीत्यादावारुण्यादेरिव नीलादिव्यावर्तकतयेतरव्यावर्तकतयेशावास्यत्वस्याङ्गत्वासम्भवात् । तस्य स्वरूपतः सर्वदा सत्वाच्च नायोगव्यावृत्त्याऽपि विशेषणत्वम् । यत्किं च जगत्यां जगदिति वाक्येन मध्ये व्यवधानाच्च पूर्वापरांशयोर्वाक्यद्वयत्वमेव स्वरसप्रतीतिकम् । ऋग्लक्षणं च 'तेषामृग्यत्रार्थवशेन पादव्यवस्थे'ति जैमिनिसूत्रितं प्रत्येकपरिसमाप्तार्थकपादबद्धमन्त्रत्वरूपमिह स्वरसतः सम्भवन्न युक्तं हातुम् । तस्माद्वाक्यत्वयमित्येव समुचितम् ।

त्यक्तेनेत्यस्य गीतोक्तत्रिविधत्यागपरत्वकथनमप्ययुक्तम् । कर्मविषयो हि स त्यागः । न चेह कर्मत्यज्यमानत्वेन कथ्यते । विविधपरिणामास्पदस्य चेतनाचेतनात्मनो द्रव्यस्यैव यत्किंच जगदित्युक्तत्वेन तस्यैव त्यागकथनात् । ननु स्वकीयेनात्मना स्वकीयैश्चोपकरणैस्स्वयमेवकर्माणिकारयतीत्यनुसंधानबलात्कर्मणीव तत्कर्तृतदुपकरणेष्वपि स त्यागोऽस्तीति गम्यते । एवञ्च कर्मणि त्यागकथने कर्त्रादावपि यथा स उक्त एव भवति तथा द्रव्यत्यागकथने कर्मत्यागोऽपि कथित एवेति । न । वैषम्यात् । कर्म हि प्रधानम् ।

कर्त्रुपकरणादि तदङ्गम् । तत्र प्रधानग्रहणे साङ्गग्रहणमिति युक्तं कर्मणस्त्यागः कथ्यमानः सांगस्यैव कथ्यमानो भवतीति । नह्येवमङ्गस्य कथ्यमानमसति वचने प्रधानस्यापि ग्रहीतुं युक्तम् । एवञ्च प्रधाने कर्मणि त्यागसिद्धये वचनान्तरेऽन्विष्यमाणे तेनैव कर्त्रादेरपि स सिद्ध्यतीति व्यर्थ इहोपदेशः । न च द्रव्येषु त्रिविधत्यागसंभवः । द्रव्याणां प्रायःस्वतस्सिद्धतया कृतिसाध्ये कर्मणीव कर्तृत्वप्रसक्त्यभावेन सर्वत्र द्रव्ये तत्त्यागस्य वर्णनायोगात् । एवं फलत्यागोपि न भवति, प्रधानकर्मजन्यफलस्य द्रव्यजन्यत्वाभावेनाप्रसक्ततया तत्र तत्त्यागवर्णनस्यासंगतत्वात् । यत्पुनरङ्गजन्यफलं प्रधानोपकाररूपम्, तत्सर्वदाऽपेक्षितमेवेति न तस्य त्यागस्सुकरः । अतस्तत्र ममतात्याग एवावशिष्यते । किञ्च त्यजिधातोर्न त्रिविधत्यागविशेषे रूढिरस्ति, येनान्यादृशस्य त्यागस्य ग्रहणं न युज्येत । अतो यावत्कर्मवाचकपदं न समभिव्याहृतम्, तत्रापि विहितकर्मवाचकपदम्, तावद्विस्पष्टार्थग्रहणेऽनुपपत्त्यभावेन न गीतोक्तलाक्षणिकत्यागपरिग्रहस्सुवचः । अतो न कर्मानुबन्धित्रिविधत्यागविधायित्वमस्य मन्त्रस्य स्वीकर्तुं साम्प्रतम् । अन्यलभ्यत्वाच्च । उत्तरो हि मन्त्रः कर्म विधास्यतीति वक्ष्यते । प्रधानविधाने चाङ्गविधानमप्यन्तर्गर्भितमेवेति न तदर्थे पृथङ्मन्त्रोऽपेक्ष्यते । किञ्च तत्र "नर" इति स्पष्टमेव त्यागोपि दर्शितः । अत एव तत्र 'एवं विदुषःफलसंगकर्तृत्वादित्यागयुक्तं नित्यनैमित्तिकरूप'मित्याचार्यपादानामवतरणभाष्यम् । अर्थपुष्ट्यभावं चास्मिन् व्याख्यानेऽनन्तरमेव दर्शयिष्यामः ।

दूषणानुपपत्तिश्च— यत्तावद्वसतेरकर्मकत्वेन ण्यत्प्रत्ययासंभवाद्वास्यमिति न व्याप्यार्थकमिति, सोयमनुक्तोपालम्भः । न हि वसतिरेव स्वीकर्तव्यः, तत्रापि ण्यत्प्रत्यय एवेतीहोक्तमस्ति । अन्यथापि व्याप्यार्थकत्वमनेकधा शक्यं वर्णयितुम् । तथा हि— भवदभिमतं वस आच्छादन इति धातुमेव

गृह्णीमः। तस्य न तावत्स्वातिशयाधायकतया धारणमर्थः। सर्वस्यापि धारणस्य कथमप्यतिशयाधायकत्वावश्यंभावेन स्वातिशयाधायकतयेत्यस्याव्यावर्तकत्वात्। न चायमतिशयो विशेषोत्कर्षरूपः, तेन निकर्षाधायकं धारणं व्यावर्त्यत इति वाच्यम् ; न हि वराङ्गनाभिरतिक्षुद्रस्य मलिम्लुचस्य वाससो धारणं वसनं न भवति। तथा च तत्र वस्त इति प्रयोगो न स्यात्। किंच मालाभूषणगोवर्धनादिकमपि ध्रियमाणमतिशयाधायकमिति कृष्णो मालां वस्ते भूषणं गोवर्धनमिति प्रयोगप्रसङ्गः। किं चानन्दतीर्थैः वृष्णीनां वासुदेवोऽस्मी'त्यत्रोक्तम् 'आच्छादयति सर्वं वासयति वसति चेति-वासुदेवः—

छादयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः।

सर्वभूताधिवासश्च वासुदेवस्ततोऽस्म्यहम्॥' इति मोक्षधर्मे इति। अतो महाभारतानुसारादिहापि वास्यमाच्छाद्यं सूर्येणेवांशुभिरिति व्याप्यमित्यर्थवर्णनमुचितम्। अपि च यद्यपि तिरोधानप्रयोजकव्यापाररूपस्यापवारणस्य वस आच्छादन इत्युक्ताच्छादनरूपत्वं न सम्भवति अथापि, आच्छादन इत्यत्र तदुपर्यपि णिजर्थाश्रयणेनापवारणानुकूलव्यापारविशेष एव वसधात्वर्थतया ग्रहीतुं शक्यते। अङ्गतिरोधानप्रयोजकव्यापारो वस्त्रनिष्ठः तदनुकूलव्यापारश्च वसानपुरुषनिष्ठ इति वस्त्रं वस्त इति प्रयोगोपपत्तिः। मालां वस्त इत्येवमप्रयोगश्च। न खलु मालादिकं धारयमाणः पुरुषोऽनेन मदङ्गमाच्छादनीयमिति मन्यते। यत्पुनरद्वैतिभिराच्छादनीयमित्यर्थमेव वास्यपदस्य स्वीकृत्य व्यपोहनीयमिति तत्पर्यवसानं कृतम्। तत्तावन्मा भूत्। तावता नासदुक्तरूपाच्छादनस्य वसधात्वर्थत्वासम्भवः। अत एवाचार्यपादैरपि शाङ्करभाष्यारूढमाच्छादनार्थकवसधातुमनिषिध्य व्यपोहनीयमिति तत्कृतपर्यवसानमात्रासम्मत्या व्याप्यमिति पर्यवसानमात्रमभिहितम्। एवमाच्छाद्यपुष्पपटमित्यादावप्यपवारणोपरि णिजर्थो ग्राह्यः। व्याप्यार्थ-

पर्यवसानं चेत्थम् । वस्त्रं हि तिरोधापनीयमङ्गं स्वयमावृत्यैव तिरोधापयति । एवं च तिरोधापकस्य वस्त्रस्याङ्गसम्बन्धावश्यम्भाववत् परब्रह्मयवनिकायमानमायामयप्रपञ्चस्य परब्रह्मसम्बन्धावश्यम्भावात् प्रपञ्चान्तर्गतसर्ववस्तुगतं तिरोधापकत्वं परस्य तावत् सम्बन्धमन्तरेणानुपपन्नमिति सिद्ध्यति जगतस्तद्व्याप्यत्वमिति । अस्तु वा धारणमेव वसधात्वर्थः । अथापि प्रागुक्तानुपपत्तिपरिहाराय विलक्षणस्य वस्त्रधारणस्यैव तदर्थत्वमेष्टव्यम् । तथा च यथा वस्त्रं यथेष्टपरिवर्तनादिना कार्त्स्न्येन धारकसम्बन्धमनुभूय धार्यभावमनुभवितुमलम् , न तथा भूषणादिकमिति कार्त्स्न्येन स्वसम्बन्धार्हधारणस्यैव धात्वर्थता कथमपि कल्पनीयेति तादृशस्य वसधातोरिह प्रयोगेणेहापि सर्वस्यापीशव्याप्यत्वतद्धार्यत्वयोरभिधानमेवाभिमतमिति निश्चीयते । तत्र धार्यत्वमीट्छब्दार्थनियन्तृत्वेन व्याप्यत्वेन चार्थसिद्धमिति गुरुभूतार्थविवक्षायामनौचित्यमाकलय्य व्याप्यत्वमेव पर्यवसायितमिति । एवं वासयतेर्धातोर्ग्रहणेन यथा मृगमदवासितं वस्त्रमित्यादौ सर्वत्र मृगमदसम्बन्धप्रत्ययः, तद्वदिहापीशावास्यमिति सर्वत्र नियन्तृसम्बन्धप्रत्यय इत्यपि कश्चिन्निर्वाहः ।

> 'वासनाद्वासुदेवस्य वासितं ते जगत्त्रयम् ।
> सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते ॥ '

इत्यत्र तथा दर्शनात् । यद्वा वसतिरेव धातुर्विवक्षितः । यद्यप्यकर्मकत्वेन ण्यत्प्रत्ययो न सम्भवति । अत एवासम्भवमालोच्यैवाचार्यपादैर्मङ्गलश्लोके 'येनावास्य' मिति सकर्मकत्वसम्पादनायाऽऽङुपसृष्टनुक्तम् ; अथाप्यन्यथैवैतदुपपत्तिरध्यवसातव्या । अत्राद्वैतिव्याख्याने क्वचन दृष्टं बाहुलकादधिकरणे ण्यत्प्रत्ययाश्रयणं नातीवानौचित्यमावहति । आच्छादनार्थकवसधातुपरिग्रहे वा वासयतिपरिग्रहे वा वस्त्रधारणादेरन्यत्र तत्प्रयोगाभावेन नूनं लक्षणैव प्रकृते समाश्रयणीया । तत्र चोपक्रमस्थप्रकृत्यन्य-

तरक्तत्वविषयवैराग्योपलक्षणम् । स्मर्यते हि—
'परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि' इति ॥ १ ॥

---

थाकरणाज्जवन्यप्रत्ययान्यथाकरणमेव न्याय्यम् । अतो धेन्वादौ गोशब्द-स्येव भूरिप्रयोगबलात् 'सर्वत्रासौ समस्तं च वसत्यत्रे' ति स्मृत्युपस्थितिबलात् शक्यार्थग्रहणौचित्याच्च वास्यमित्यत्र वसतिरेव धातुरिति निश्चिते पश्चादालोच्यमानः प्रत्ययासम्भवः प्रकारान्तरेण परिह्रियत इति युक्तमेव । अपि च वसतिनिष्पन्नवासरूपप्रातिपदिकात् 'छन्दसि यत्' इति यत्प्रत्ययसम्भवेन वास्यमिति सुखं निरूढम् । ईशेति तृतीया च वासपदार्थान्वयि कर्तृत्वं हेतुत्वं वा वक्तीत्युपपन्नम् । नन्वेवमर्हार्थे यत्प्रत्ययाश्रयणे वासार्हमित्येव सिद्ध्यति न तु वासाधिकरणमितीति चेत् भवताऽपि धारयितुं योग्यमित्येवार्थस्य वर्णितत्वेन ध्रियमाणमिति न सिद्ध्यतीति तुल्यम् । किं चात्र यदुत्तरं तत् प्रकृत्यन्यथाकरणात् प्रत्ययान्यथाकरणं न्याय्यमिति प्रागेवोक्तम् । अत एवोततमादेशमप्राक्ष्य इत्यत्र शासनस्वरसाऽऽङ्पूर्वकदिशधातुरूपप्रकृत्यनुसारेण प्रत्यय एव घञ् कर्तुः करणत्वविवक्षया कथञ्चिन्नीतो भगवता भाष्यकृता । अपि चायमपेक्षित इहार्हार्थप्रत्ययनिर्देशः । अपरिमितदुःखावहोऽयमतिघोरो मायामयः प्रपञ्चो न परस्य निवासाधिकरणभावमर्हति । तथा यदि, सजीवनिर्विशेषः स्यादिति शङ्कापरिहारायायं प्रत्ययः । अखिलहेयप्रत्यनीकस्य तस्य नायमनर्थमाधातुमलमित्यर्हत्येव सर्वं तद्वासमिति तात्पर्यम् । तदिदं सर्वमाचार्यपादैरेव द्वितीयश्लोके व्यञ्जितम्—

'सर्वेशानः सहजमहिमा सर्वभूतान्तरात्मा
सर्वान् दोषान् स्वयमतिपतन्.... । इति ।

ईशशब्दार्थकथनं प्रथमेन पदेन । वसधातुलभ्यविभुत्वकथनं द्वितीयेन । व्यापित्वनियन्तृत्वोभयाभिधानसिद्धशरीरात्मभावकथनं तृतीयेन प्रत्ययार्थतात्पर्यकथनं चतुर्थेनेति । एवमत्र सर्वभूतनिवासः श्रीनिवास इत्यादावधिकरणे घञ् दृश्यत इति वसनाधिकरणार्थकवासपदस्वीकारेण वासं करोति वासयतीति धातुकल्प-

नया ण्यत्प्रत्ययान्तं वास्यपदमित्यपि रम्यम् । यत्पुनरुत्तरवाक्यार्थानुपकारकत्वाद्व्याप्यार्थकत्वं न ग्राह्यमिति ; तत्प्रतिज्ञामात्रम् । पारतन्त्र्यमेव ह्युत्तर वाक्यार्थोपयोगि वक्तव्यमिष्टम् । तदीदृक्छब्देन नियन्तृत्वकथनादेव सिद्धम् । व्याप्यमित्यात्मत्वोपयोगिव्याप्तिकथनेन शरीरात्मभावसूचनेन सार्वकालिकं पारतन्त्र्यमपि सिद्ध्यति । भवदभिमतार्थवर्णन एव पुनर्वस्त्रादितुल्यत्वप्रतीत्या नातीव तदेकपारतन्त्र्यग्रहः । अतो वस्त्राद्यपेक्षया देहस्यात्मानं प्रत्यत्यन्तपारतन्त्र्यसत्त्वेनास्मदर्थ एवात्यन्तमुपकारकः । अत एवाचार्यपादैः 'एवं—पारतन्त्र्यबोधमुत्पाद्य—' इत्युत्तरार्धमवतारितम् । एवं चोपबृंहणविवक्षितार्थान्तरप्रदर्शनाय प्रकृतिप्रत्ययस्वारस्याविघातेन च णिजन्तवसधातोः कर्मणि ण्यत्प्रत्ययाश्रयणेन वासनीयमिति भाषितद्वितीयार्थेऽप्युत्तरवाक्यार्थोपकारकत्वमक्षतम् । यद्येतस्यार्थस्यानुपकारकता तर्हि प्रकृत एव भवतैव श्रुतप्रकाशिकासूक्त्युद्धारेण तदर्थवर्णनावसरे णिजन्ताद्वसतेर्ण्यत्प्रत्ययः कथङ्कार कथितः । नूनं समनन्तरस्वाभिप्रेतमपि स्वस्य दूषणाभिनिवेशतिमिरेण तिरोहितमासीदित्यलम् ।

यत्पुनः स्वरूपत्यागस्यैव सम्मतत्वेनोपलक्षणतृतीया न घटत इति, तत्रोच्यते । अस्तु नाम तात्कालिकवैशिष्ट्यमेवोपलक्षितत्वमानुशासनिकमिति । स्वरूपत्याग एवायं किंरूप इति विचारणीयम् । तेनेति तच्छब्दस्तावत् पूर्वार्धप्रस्तुतं कृत्स्नं जगत्परामृशति । कृत्स्नस्य च स्वरूपतस्त्यागो न कस्यापि सुकरः । न खल्वाश्रमिणो मौञ्ज्यजिनगृहक्षेत्रदण्डकमण्डलुकरणकलेबराद्यशेषमपि त्यक्तुमलं भवन्ति । नो खलु ब्रह्मविज्ञानारम्भ एव ते प्रकृतिमण्डलमतिक्रम्य परमपदं परिष्कुर्वन्ति । तथा सति मुधैव 'मा गृधः कस्यस्विद्धनम्' इत्यादय उपरितना उपदेशाः । अतो ब्रह्मविदुषस्तदनुचितेषु भोग्यभोगस्थानोपकरणेषु यद्यपि कतिपयेषु स्वरूपतस्त्यागः सम्भवी, अथाप्यशक्यत्यागेषु सर्वेषु विषयेऽनुचितफलेष्वनियोजनरूपत्या-

गविषयेण स्वस्वामिभावसम्बन्धेनैष उपलक्षितः । यत्पुनरस्वं भवति तेनापि स्वरूपतोऽन्यरूपतो वा त्यक्तेन तदनुभवयोग्यप्रकृतिसम्बन्धवत्तारूपसम्बन्धेनोपलक्षित इति न प्रकृतिमण्डले परिभ्रमतो विदुषः प्राकृतप्रपञ्चोपलक्षितत्वहानिः । ईदृशोपलक्षितत्वकथनस्य चाऽऽमोक्षमात्मनो भवहेतुसद्भावप्रदर्शनेन सदा जागरूकेण भवितव्यमित्युपदेशे तात्पर्यम् । निपुणनिरूपणे तु त्यक्तेनेत्यनेनात्यन्तिकत्यागविवक्षणेऽपि न काऽपि हानिः । त्यक्ततदुपलक्षितत्वं नाम तत्त्यागोपलक्षितत्वरूपमेव । त्यागानन्तरं वस्तुवैशिष्ट्याभावेऽपि त्यागवैशिष्ट्यमात्रेण तथा प्रयोग उपपद्यते । अत एव श्रीमति गीताभाष्ये 'नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन' इत्यत्र (३-१८)अकृतेनात्मदर्शनसाधनेन न कश्चिदनर्थ इति भाषितम् । नह्यकृतत्वादेवास्मानमलभमानमात्मदर्शनसाधनमनर्थसाधनी भवितुमलम् । अतोऽकरणजन्यत्वमेव कर्मणि क्तप्रत्ययाश्रयणेनाप्यध्यवसितमित्यभ्युपेत्यम् । अतस्त्यागोपलक्षितत्वमेव त्यक्ततदुपलक्षितत्वम् । एवं 'त्वया हतेन पापेन जीवामि शरदश्शतमि'त्यादयः तथा काव्यगताश्च बहुलं प्रयोगा द्रष्टव्याः । 'सविशेषणे हि विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुपसंक्रामतः' इति न्यायाच्च विशिष्टोपलक्षितत्वं विशेषणोपलक्षितत्वे पर्यवस्यति । एवं तेनेति करणे तृतीयैव । त्यागगतकरणत्वस्य त्यक्ते वस्तुनि पूर्ववत् सुवचत्वात् । उपलक्षित इति भाषणं तु कादाचित्कं तद्वस्तुसम्बन्धमेव दर्शयति । न त्वित्थंभूतलक्षणतृतीयाभिप्रायकमपि । अतश्च स्वरूपतस्त्यक्तस्य पश्चात् कः सम्बन्ध इति विचारो वृथैव । अथापि त्यागोपलक्षितत्वमात्रस्य श्रुत्यभिमतत्वे 'तस्य त्यागेन भुञ्जीथा' इत्येव स्वरसनिर्देशः स्यात् । अन्यथा निर्देशात् पुनरभिप्रायान्तरं त्यक्तपदार्थेन सह पुंसः कश्चित् सम्बन्धः सप्रयोजन इह वक्तव्य इत्येवंरूपमस्तीत्यालोच्य मात्रसम्बन्धोऽपि कश्चिद्दर्शितः । स्वभूतस्य वस्तुनः स्वस्वामिभावः, अन्य-

स्य च प्रपञ्चप्रविष्टे जीवेऽन्यादृश इति । भवत्पक्षे तु स्वस्वामिभावसम्बन्धेन सम्बन्धिवस्तुमात्रविषयकत्विविधत्यागपरेऽयं मन्त्र इति 'तस्य त्यागेने'ति निर्देश एव स्वरसः । उपलक्षणतृतीयामपेक्ष्य करणतृतीयाया ज्यायस्त्वात् । न च स्वस्वामिभावसम्बन्धबोधनायैव निर्देश इति वाच्यम् । मागृध इति परस्वजिघृक्षाप्रतिषेधादेव भोज्यवस्तुनः स्वत्वावश्यकत्वस्य सुकरनिश्चयत्वात् । अत एवंरूपनिर्देशो निष्प्रयोजन आपद्यत इति ध्येयम् । अत एव भवदुक्तादप्युचिततरः 'तेन त्यक्तेने'त्यनयोरसामानाधिकरण्याङ्गीकारेण 'तेन--तस्मात् पूर्वोक्ताद्धेतोः त्यक्तेन—परमात्मीयतया निश्चितेन वस्तुना करणेन भोक्तव्यं भुञ्जीथा'इति * कश्चित्कृतो व्याख्यानप्रकारोऽपि अन्यथासिद्धत्वादप्रयोजनत्वाच्च नात्राद्रियते । एवं स्थिते कथं भवदुक्तार्थग्रहणप्रसक्तिः । अपिचोपलक्षितत्वं तात्कालिकवैशिष्ट्यरूपमित्यपि न नियमः । कादाचित्कसम्बन्धमात्रस्यैवेत्थंभूतलक्षण इति विहिततृतीयानियामकत्वात् , तस्य च सम्बन्धस्य तात्कालिकत्वस्य तद्भिन्नकालिकत्वस्य वाऽविवक्षितत्वात् । तथा च भट्टाचार्यो व्युत्पत्तिवादे 'लक्षणत्वं व्यावर्तकत्वम्—तदाश्रयश्च धर्मो द्विविधो विशेषणमुपलक्षणं च । विद्यमानं सद्व्यावर्तकं विशेषणम्—अविद्यमानं व्यावर्तकमुपलक्षणम् , तापसादेः कालान्तरीणजटादिकम्' इति । उपरि च वर्णयामास तात्कालिकसम्बन्धविवक्षायां मतुबादयो भवन्ति । तेषामस्तीति वर्तमानकालग्रहणेन विहितत्वात् । अतो जटाभिस्तापस इत्यादावविद्यमानजटादेः सम्बन्धविवक्षया मतुबाद्यनवकाशात् तृतीयेति । एवं च तात्कालिकवैशिष्ट्यस्य वस्तुनः सद्भावस्थलेऽपि तृतीयाया अनिषेधमात्रम् । वैशिष्ट्याभावस्थल एव तस्या आवश्यकत्वं सिद्धम् । अतो विशेषणोपलक्षणसाधारणी तृतीयेति शास्त्रविदां निर्णय इति न काचिदनुपपत्तिः । ज्ञाप्यज्ञापकभावस्तु वस्तुनो धर्मिणि तृतीयाप्रकृत्यर्थे च वर्तमानः , न तृतीयाया

* श्रीभागवते वीरराघवीये ।

अर्थ इति भट्टाचार्याणामाशयः । सोऽपि विशेषणोपलक्षणसाधारण एवेत्यलम् ।

यदपि भुञ्जीथा इत्यत्र कर्माध्याहारः करणाध्याहारश्चायुक्त इति ; तत्र करणाध्याहारो भवत्सम्मतभोगस्यापि करणसापेक्षत्वादेव अवश्यम्भावी । करणस्यावश्यकत्वेऽप्यध्याहृत्य शाब्दबोधविषयत्वसम्पादनमनावश्यकमिति चेदिहापि तुल्यम् । वक्ष्यमाणोपायमुखेनेत्युक्तिस्तु वस्तुतः करणसद्भावात्, उपायानुष्ठानं विनाऽपि भवेत् ब्रह्मलाभ इति भ्रान्त्युदासार्थम्, उपायाभावादशक्यं ब्रह्म भोक्तुमित्याशङ्कापरिहारार्थं च केवलमन्यसिद्धानुवादः । न तु तदध्याहारावश्यकत्वाभिप्राया । कर्माध्याहारस्तु प्रागेव पूर्वार्धस्य वाक्यद्वयरूपतायास्तेनेत्यादेः पृथग्वाक्यतायाश्चोपपादितत्वेन कर्मवाचिपदान्तराभावात् भवताऽपि सम्मन्तव्यः । तत्र विषयविरक्तिमुखजनकतया विधीयमानो भोग औचित्यात् परमात्मविषय एव युक्तः । पूर्वार्धे उपस्थितत्वाच्च तस्यैव कर्मत्वमुचितम् । देहधारणाद्यौपायिकश्च भोग उपलक्षिततत्त्वकथनसिद्ध एवेत्यभिप्रेत्य द्वितीयरीत्यनुसरणम् । ननु सर्वस्येश्वरीयत्वाविशेषात् स्वकीयपरकीयविभागाभावेन परकीयत्वेनाभिमतधनग्रहणेनापि देहयात्रोपायसाधनं युक्तम् ; तत्राह **मा गृधः कस्यस्विद्धनमिति** । ईश्वरीयत्वाविशेषेऽप्यौपाधिकेदंस्वत्वस्यापि तत्सङ्कल्पाधीनस्य प्रमाणसिद्धतया न परकीयग्रहणमुचितमिति भावः । 'इदं च धनाशाप्रहाणं परमात्मेतरकृत्स्नविषयवैराग्योपलक्षण'मित्याचार्यपादभाष्यम् । एवञ्चानेन तुरीयपादेन

'सम्भूतिं च विनाशं च यस्तद्वेदोभयं सह'

इति समुच्चेष्यमाणं शमदमादिरूपं मानस्तम्भादिबाहिर्मुखेन्द्रियवृत्तिविनाशात्मकं विद्याङ्गमुपदिष्टं भवतीत्याशयः । कर्माख्यमङ्गं तु द्वितीयमन्त्रेण विधास्यते । विधेर्निषेधो बलीयानिति न्यायेन प्रसक्तशङ्कापरिहाराभिप्रायेणास्य प्रथममभिधानमिति ।

तथा चायमस्मन्मते प्रतिपदतात्पर्यपरिशीलनेन निर्गलितोऽर्थः—

इदमतिदुःसहदुःखजालसंकुलमनुक्षणलक्ष्यमाणविषमपरिणतिकमध्यननपति-
जायापुत्रवित्तादिकमन्यदप्यैश्वर्यकैवल्यरूपमखिलमपि निखिलजगन्नियमन-
धुरन्धरेण निरन्तरव्याप्तं अत एव तं प्रति शरीरभावमापन्नमनर्थसन्तान-
विधानसमर्थत्वेऽप्यखिलेहयप्रतिभटे तत्रात्यन्तकुण्ठितशक्तिकमखिलास्वप्यव-
स्थासु केवलमनुकूलस्वभावमदःपरवशत्वेनानन्तकर्मबद्धानामस्माकमनुबन्धिनां
वा काममुपेक्ष्य केवलममुष्य काममनुसृत्य प्रवर्तमानमत्यन्तहेयमवबुद्ध्याश-
क्यपरिहारादन्यदशनमपि परिहृत्यात्मन इत्थंभूतपदार्थप्रचुरनपञ्चमध्यपरिभ्र-
मणशीलतया केनापि कदाऽपि गर्ते निपातितः स्यामिति भिया सर्वदा जा-
गरूकास्थितिमधिगम्यावश्यकं च देहधारणादिकमात्मनः स्वभूतेनार्थेनावसरो-
चितं विधाय यथार्हमात्मीयं वस्तु विद्योपयोगिषु कर्मसु विनियुज्यान्यदीयेषु
धनादिष्वविशङ्कविकारामाशापिशाचीं परिभूय शमदमादिसकलनिवृत्तिपरिक-
र्मितः, यस्येदमखिलं जगदात्मा चाशेषतः परवशममुमेव परमपुरुषमनव-
धिकातिशयासंख्येयकल्याणगुणगणमनन्तमहानन्दमनारतमत्र परत्र च सर्वमु-
क्तः सुखमनुभवेति । भवत्पक्षे पुनरिदमेवंभूतं जगदीश्वरेण स्वप्रयोजनैक-
विनियोजनयोग्यमिति विज्ञाय पारतन्त्र्यबोधेन त्रिविधत्यागसंस्कृतपदार्थस्वा-
मीभूय परकीयं वस्तु परिहृत्य सर्वमिदं भुङ्क्ष्वेति निर्गलितार्थः । तत्र
प्रागुक्तपक्षे शरीरात्मभावरूपप्रतितन्त्रार्थ उभयलिङ्गत्वं ब्रह्मविद्योपक्रमोपदेश्य-
सकलफलत्यागस्तत्र जागरूकत्वं स्वभूतेन विद्यौपयिकदेहयात्रादिनिर्वाहः श-
मदमादिः परमपुरुषे तृष्णा प्रधानफलपरिज्ञानमित्येवमनन्तार्थसिद्धिः ।
अपरस्मिंस्तु वस्त्रधारकनिर्विशेषजगद्धारकत्वसिद्धिरपेक्षितसर्वत्यागानभिधानेनो-
त्तरमन्त्रावगतत्यागस्यैवाभिधानमित्येवम् । तत्र कतरस्मिन् पक्षे मन्त्रस्या-
पौनरुक्त्यमपेक्षितोक्तिरर्थपुष्टिश्चास्तीति मध्यस्थसुखं परिशील्यतामिति । अत्र
प्राप्यस्य ब्रह्मणो रूपमित्युक्तार्थपञ्चकं क्रमेणानुसन्धेयम् ॥ १ ॥

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ २ ॥

---

**एवं विदुषः फलसङ्गकर्तृत्वादित्यागयुक्तं नित्यनैमित्तिकरूपं कर्म यावज्जीवमनुष्ठेयमित्याह— कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा इति । ब्रह्मविदोऽपि यावद्विद्यापूर्ति जीवनमिष्टं भवतीति ज्ञापनाय सम्प्रयोगः । शतमिति च प्रायिकविषयम् । शतं समा जीवन्नधिकारानुगुणानि कर्माणि कुर्वीतैव । न कदाचिदपि विद्याङ्ग**

---

संहितान्त एवास्य निबन्धो यदर्थस्तदत्र दर्शयतीति द्वितीयमन्त्रमवतारयति एवमिति । यदुक्तम्—अस्मिन् भाष्ये मन्त्रस्यास्य विद्याङ्गभूतकर्मविधानपरत्ववर्णनम् , नाविशेषात् इति सूत्रस्य तत्र प्रमाणीकरणम्, स्तुतयेऽनुमतिर्वेति सूत्रस्य पूर्वसूत्राभिसंहितादर्थादर्थान्तरवर्णनपरत्वकथनम् , मन्त्रोत्तरार्धव्याख्यानप्रकारश्च न युज्यते । तथा हि—अस्य मन्त्रस्य विद्याङ्गकर्मानुमतिमात्रपरत्वेन विधानपरत्वं न सम्भवति । विधिपरत्वे हि सर्वैरपि विद्वद्भिरवश्यकर्तव्यत्वं प्रसज्यते । अतो गार्हस्थ्ये स्थित्वाऽनुष्ठेयमन्यदा च नेत्यनुमतिपरत्वमेव । सूत्रयोर्विभिन्नार्थकत्वे चोत्तरसूत्रे भाष्ये 'वाशब्दोऽवधारण' इति न सङ्गच्छते । तथा सति फलान्तरपरत्वस्यैव वक्तव्यत्वात् । 'अर्थस्वाभाव्येन चोद्यं परिहृत्य कुर्वन्नेवेति वाक्यस्यार्थमाहे'त्युत्तरसूत्रावतरणभाष्यपर्यालोचने च पूर्वसूत्रस्य चोद्यपरिहारमात्रपरत्वम्, उत्तरस्यैव चार्थवर्णनपरत्वं स्पष्टम् । किञ्चोत्तरस्यार्थान्तरपरत्वेन तद्विहाय पूर्वसूत्रार्थस्य कर्मविधानरूपत्वेनाभिमतस्येह समादरणमयुक्तम्, अन्ततः सूत्रकारनिष्कृष्टार्थस्यार्वाचीनैस्त्यागायोगात् । उत्तरार्धव्याख्यानप्रकारश्च विधिपरत्वाभावादेव व्युदसनीयः । अनुमतिपरत्वस्यैव प्रतिपादितत्वेन तदा कर्मानुष्ठानस्याननुष्ठानस्योभयोरपि सद्भावेन 'नान्यथेतोऽस्ति' इति वक्तु-

**कर्म परित्यजेदित्यर्थः । अस्य वाक्यस्य फलसाधनभूतस्वतन्त्रकर्म-विषयत्वे विशेषहेत्वभावः सूचितः, 'नाविशेषादिति' । अर्थान्तरं च प्रकरणाविरुद्धमनन्तरसूत्रोक्तम् 'स्तुतयेऽनुमतिर्वे'ति । भाष्यम्,**

---

मशक्यत्वात् । अतः श्रुतप्रकाशिकोक्तैव योजना ग्राह्या । तथा चायं मन्त्रार्थः । एवं त्रिविधत्यागानुसन्धानपूर्वकं कर्माणि विद्याङ्गतया यथाशक्ति कुर्वन्नेव जिजीविषेत । ननु बुभुक्षुं प्रति विहितानामविशेषेणानुष्ठाने मुमुक्षोरपि बुभुक्षोरिव बन्धः स्यादिति शङ्कापरिहारायोच्यते त्वयीत्यादि । न रमत इति नरे फलानुरागरहिते त्वयि कर्म न लिप्यत इत्यस्मात् प्रकारादन्यथा प्रकारान्तरं नास्तीत्येवम् ;

तत्र ब्रूमः । वस्तुत इदमाचार्यपादभाष्यं विद्याङ्गकर्मविधानपरमेवेति, सूत्रभाष्यसम्मतमेवेदमिति च समनन्तरमेव स्पष्टं वर्णयिष्यामः । अथाप्यादौ भवदभिमतरीत्या मन्त्रार्थपरिग्रहेऽपि सर्वथा सुयोजस्य भाष्यस्यास्य दूषणसंरम्भोऽयमत्यन्तमनुचित इत्यावेदयामः । क्वचित्क्वचिदर्थवर्णने कियानपि क्लेशो भवतीति सर्वग्रन्थसाधारणमेतदिति, भवतैव ईशावास्यमित्यस्य श्रुतप्रकाशिकोक्तसमर्थनावसर एवं क्लेशः समाश्रित इति च नाल्पक्लेशदर्शनमात्रेण सम्भावितसामरस्येषु वाक्येषु मुधैवाग्रहप्रदर्शनं पण्डितानां शोभते । सति सम्भवे सामरस्यसम्पादनमेव हि सर्वत्र पण्डितकृत्यम् । तदत्रादौ भवत्पक्षपरिग्रहेणैव भाष्यं योजयामः । भवताऽपि 'कर्मयोगं विद्याङ्गतया यावज्जीवमनुष्ठेयं प्रतिपादयतो'त्यवतारितत्वेनोभयत्रावतरणिका सरूपैवेति न तत्र विवादस्यावसरः । तत्र यावज्जीवानुष्ठेयविद्याङ्गकर्मसु कर्मयोगत्वं भवदुक्तं प्रसिद्धं न वेत्येतत् पुनरन्यत् । जिजीविषेदिति लिङो विध्यर्थकत्वेऽनुमत्यर्थकत्वे वा न जीवनेच्छारूपधात्वर्थान्वयित्वम्, किं तु कुर्वन्नेवेति कर्मानुष्ठानान्वयित्वम्, योग्यत्वादेवकारोपबन्धाच्चेत्यप्युभयसम्मतम् । एवं चाधिकारानुगुणानि कर्माणि कुर्वीतैवेति भाष्ये लिङ्प्रत्ययो विधिपरत्वे

विधास्यति, अनुमतिपरत्वे चानुमंस्यते । अधिकारानुगुणानीत्येतदेव च भवता स्ववर्णस्वाश्रमाधिकारानुगुणतया प्राग्विहितानीति विवृतम् । एवकारश्च श्रुताविव श्रूयमाणो विधिपरत्वेऽपरित्याज्यतां , अनुमतिपरत्वे चानुष्ठानस्यानर्थानावहत्वं बोधयिष्यति । 'विशेषहेत्वभावः सूत्रितः नाविशेषा'दिति भाषितत्वात् 'अयमर्थो नाविशेषादिति सूत्रित' इति किञ्चिदर्थपरत्वाभाषणाच्च सूत्रमिदं पूर्वपक्षिसाधकाभावमात्रप्रदर्शनपरम् , न तु मन्त्रस्य किञ्चिदर्थवर्णनपरमिति भवत्सम्मत एवार्थःसम्यगभिसंहितो लक्ष्यते । **अर्थान्तर**मिति पूर्वपक्ष्यभिमतादर्थादर्थान्तरमित्यर्थः । पूर्वपक्ष्यर्थश्चायम्—यावज्जीवं काम्यानि कर्माणि तत्तत्फलोद्देशेन कर्तव्यानि । एवमेव त्वयि । अकर्तव्यत्वरूपप्रकारान्तरं नास्ति । नन्वेवं काम्यकर्मानुष्ठाने तत्र पशुहिंसादिनिषिद्धानुष्ठानस्याप्यापातेन विधिबलेन फलोत्पत्तावपि निषेधबलेन प्रत्यवायस्यापि प्रसज्यमानतयाऽनिष्टलेपकत्वं कर्मणः स्यात् । नेत्याह न कर्म लिप्यते नर इति । 'अशुद्धमिति चेन्न शब्दा' दित्युक्तप्रकारेण न प्रत्यवायलेशप्रसक्तिरिति भाव इति । तदपेक्षया चार्थान्तरमेव सिद्धान्त्यभिमतम् । काम्यानि कर्माणि फलाभिसन्धिविरहेण कुर्वीत । फलानुद्देशादेव न तेषां लेपकत्वमिति । **प्रकरणाविरुद्ध**मिति । पूर्वपक्ष्यर्थो विरक्तं प्रत्युपदिश्यमानविद्याप्रकरणविरुद्धः , पूर्वमन्त्रेण सर्वत्यागस्याभिहितत्वात् । अयं तु तद्विरुद्ध इति । अर्थान्तरपदस्य नाविशेषादिति सूत्राभिप्रेतार्थादर्थान्तरपरत्वेऽस्य प्रकरणाविरुद्धत्वकथनेन तस्य विरुद्धत्वं विवक्षितं प्रतीयेत । तच्चायुक्तम् । तथा सति तद्वर्णनारम्भस्यैवानुचितत्वाच्च ।

यत्तूत्तरार्धव्याख्यानमन्यादृशमिति , तत्प्रकारान्तरपरिग्रहस्यानुचितत्वात् । तथा हि—भवद्रीत्यनुसरणे स्वरसत उत्तरार्धान्वयित्वेन प्रतीयमानस्यैवकारस्य पूर्वार्धे निवेशनं क्लिष्टम् । त्वयीत्यस्य नर इत्यनेन मध्ये किञ्चिद्वाक्यव्यवहितेनान्वयः क्लिष्टः । इत इत्यस्योक्तार्थपरामर्शस्वरसस्य न

कर्म लिप्यत इति वक्ष्यमाणपरत्वं क्लिष्टम् । एवं इतीत इति इतिशब्दा-ध्याहारोऽपि दूषणम् । न चानुमतिपरत्वात् कथं नान्यथेतोऽस्तीति वक्तुं शक्यमिति शंक्यम् । तथात्वेऽपि एवं त्वयि विदुषि त्वयि गार्हस्थ्यसत्त्वे कर्माण्यनुमन्यन्त इत्येवमेव । नान्यथेतोऽस्ति अनुमन्यन्त इत्यस्मात् प्रकारात् प्रकारान्तरं नास्ति , नानुमन्यन्त इति नास्तीत्यर्थः । अनुमन्यन्ते चेत् कथं न बन्धस्तत्राह न कर्मेतीत्येवमर्थवर्णनसम्भवेन स्वरसत्यागेन क्लेशग्रहणस्यानुचितत्वात् । अत एव श्रुतप्रकाशिकोक्तमपि न स्वीकृतमाचार्यपादैः । कथं पुनर्महद्भिरभिहितस्यार्थस्य युक्तं प्रहाणमिति चेत्, व्यर्थोऽयं पर्यनुयोगः । नैवमनुयोगमात्रेण, 'श्रुतप्रकाशिका भूमौ येनादौ परिरक्षिता । प्रवर्तिता च पात्रेषु' तस्मादेतस्मादाचार्यवर्याद्भवत इह भूयानादर इति स्वप्नेऽपि कश्चिन्मन्येत । हन्तैवं व्यासार्यक्षुण्णेनैव वर्त्मना सञ्चरमाणेन भवता कथङ्कारमिहैव स्तुतयेऽनुमतिर्वेति सूत्रावतरणभाष्यस्थपदस्य श्रुतप्रकाशिकादर्शितोऽर्थः परित्यक्तः । अर्थस्वाभाव्येनेति भाष्यस्थपदं हि भवता 'कर्मपदार्थस्य विद्याङ्गसाधारणरूपत्वस्वभावज्ञापनेने'ति व्याख्यातम् । व्यासार्यास्तु 'अर्थस्वाभाव्यं विद्याया अर्थज्ञानादर्थान्तरत्वं कर्मेतिकर्तव्यताकत्वं चे'ति व्याचख्युः । अत्र हि भवन्मतेऽर्थपदं कर्मपरं व्यासार्यमते तद्विद्यापरम् । एवं स्वाभाव्यपदार्थेऽपि भेदः इति । इयान् विशेषः——भवदुक्तार्थस्य भाष्याभिमतत्वे साधारण्यपदप्रयोग एव स्वरसः , न तु स्वाभाव्यपदप्रयोगः । एवं च स्वरसं श्रुतप्रकाशिकाचार्यसम्मतमर्थं परित्यज्यास्वरसोऽर्थो भवताऽभ्यधायि । आचार्यैः पुनरस्वरसं परित्यज्य स्वरस इति । परमसिद्धान्तबाधविरहे वाक्यार्थयोजनाभेदो न दूषणमर्हतीति चेत् तत् सर्वत्र तुल्यम् । इदमत्र भाति——'ईशावास्यमिदं सर्वं, एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नर' इति भाष्योपात्तसमस्तश्रौतपदव्याख्यानपरश्रुतप्रकाशिकायां एवङ्कारस्य व्याख्यानं न दृश्यते । 'इदमेव तत्त्वं न स्तुतिमात्रमित्यर्थ' इति चाधिकं लक्ष्यते ।

नूनमिदमेवैवङ्करतात्पर्यवर्णनरूपमेष्टव्यम् । यदि पुनरत्र 'इदमेवं तत्त्व'मिति पाठः स्यात्तर्ह्यौचित्यमुत्पश्यामः । एवमिति व्याख्येयम् । तत्त्वमिति तदर्थः । न स्तुतिमात्रमिति तद्विवरणम् । अतश्चान्ते अर्थे इत्यपि स्वरसम् । तथा च भवत एवमित्यस्य पूर्वार्धेन योजनं व्यासार्याभिप्रायविरुद्धमिति । वस्तुतः पुनरियं सूक्तिरित्थमपि योजयितुं शक्यते । 'नरे त्वयि न कर्म लिप्यत इति हेतोः इतः पूर्वार्धोक्तादन्यथा नास्ति । इदमेवं तत्त्व'मिति । एवञ्चेदंशब्दः पूर्वोक्तमेव परामृशतीति नातीवाचार्यव्यासार्याभिमतयोजनाभेदः ।

एवं सर्वस्मिन्नपि भाष्ये भवद्रीत्यैव समञ्जसे 'न कदाचिदपि विद्याङ्गं कर्म परित्यजेदित्यर्थः' इति वाक्यशकलमेव केवलमनुमतिपरत्वे क्लिष्टवर्णनमिव । तथाऽपि सामरस्यं सम्पाद्यम् । अस्य वाक्यस्य विद्याङ्गकर्मपरित्याज्यता न कदाचिदपीत्यत्र तात्पर्यम् । विद्याङ्गं कर्म परित्यजेदित्यर्थः । कर्मावश्यं त्याज्यमेवेत्ययं विषयो न कदाचिदपीति योजनया वाऽन्यथा वाऽयमर्थोऽनुसन्धेयः । तस्माद्भवत्पक्षेऽपि भाष्यमिदं सुयोजम् । सूत्रभाष्ये एव पुनर्भवत्पक्षप्रतिकूले । तत्तयोः स्वपक्ष एवानुकूल्याभिमानोऽस्य प्रातिकूल्यत्वाभिमानश्च केवलमिह विद्वेषविजृम्भित इति ।

वस्तुतो द्वयोः सूत्रयोर्विधानानुमतिरूपार्थद्वयतात्पर्यकत्वमस्य भाष्यस्य तदभिप्रायकत्वमेव च युक्तम् । तथा हि—पुरुषार्थाधिकरणपूर्वपक्षिणा हि कुर्वन्नेवेति श्रुतिर्यावज्जीवं फलोद्देशेन कर्मानुष्ठानविधानपरत्वेनैव योजिता । तं प्रति नाविशेषादिति सूत्रेण स्वतन्त्रकर्मग्रहणे विशेषहेत्वभावात् विद्याङ्गकर्मग्रहणमेव किं न भवतीत्युक्तौ विद्याङ्गकर्मानुष्ठानविधानपरत्वमेव किं न स्यादित्येव खल्वर्थः स्वरसतः प्रतीयते । न च पूर्वपक्षिमतेऽनुमतिपरत्वमस्ति, फलोद्देशेन कर्मविधानस्यानुमतिरूपत्वाभावात् । अनुमतेः पूर्वपक्षिमतत्वे स्तुतयेऽनुमतिर्वेत्यर्थवर्णनस्यानावश्यकत्वाच्च । न च तत्त

त्फलोद्देशेन तत्तत्कर्मविधानस्य तत्तत्कर्मकाण्डान्तर्गतवाक्यसिद्धतया न तद्वि-
धानपरत्वमस्य पूर्वपक्षिसम्मतम् । अपि तु तथाविधफलसाधनकर्मोद्देशेन
कृत्स्नपुरुषायुषविधानपरत्वमेवेति वाच्यम् ; तथा सति सिद्धान्तिनाऽपि वि-
विदिषन्ति यज्ञेन दानेनतपसाऽनाशकेनेत्येतादृशवाक्यविहितविद्याङ्गकर्मोद्देशेन
कृत्स्नपुरुषायुषविधानस्वीकारसम्भवेन नाविशेषादिति सूत्रस्य तत्र तात्पर्यव-
र्णनस्य सुकरत्वात् । किं च विधानं हि कर्तव्यत्वेन ज्ञापनम् । सर्वत्र
विधेरस्ति द्वयं प्रमेयम् । प्रवर्तकत्वात् कृतिविषयत्वं प्रमाणत्वादज्ञातज्ञा-
प्यत्वं चेति । तत्र यत्रानुष्ठेय एव पदार्थो विधीयते तत्र तत् द्वयमपि
तत्पदार्थगतमेव विधिना प्रमीयते । यत्र पुनरनुष्ठातुमशक्यस्य विधिः -
यथा सायं जुहोतीति वाक्येन प्राप्तमग्निहोत्रमुद्दिश्य सायङ्कालस्य , तत्र का-
लस्याज्ञातज्ञाप्यत्वेऽपि कृतिविषयत्वाभावात् विधिप्रमेयं कृतिविषयत्वं होम
एवावतिष्ठते । अतः कर्तव्यत्वेन ज्ञापनं होमविषयकमेव । तद्वत् प्रकृते
ऽपि कृत्स्नपुरुषायुषरूपकालस्याज्ञातज्ञाप्यत्वेऽपि कर्तव्यत्वाभावात् कर्तव्य-
त्वेन ज्ञापनरूपं विधानं कर्मणामेवेति पुरुषायुषात्मककालावच्छिन्नकामसा-
धनकर्मविधानं पूर्वपक्षिमतमिति निष्कृष्य सूत्रकारैस्तादृशकालावच्छिन्नविद्या-
ङ्गकर्मविधानमेव किं न स्यादिति नाविशेषादित्यनेनोक्तमिति ।

ननु यावज्जीवमेकफलोद्देशेन काम्यकर्मप्रयोग एक इह विधीयत
इति तावन्न कश्चिदिच्छति । तत्र पूर्वपक्षिमते कर्मकाण्ड एव फलोद्देशेन
कर्म विहितमिति तत एव प्रवृत्तिः सिद्ध्यति । तत्र चाजीवता पुरुषेण
कर्मणोऽनुष्ठातुमशक्यत्वेन जीवनकाल एव यथाऽवसरं करिष्यत इति
किमस्य वाक्यस्य कृत्यम् । न चावश्यं यत्किञ्चित् कर्म कर्तव्यम् न तु
तूष्णीं स्थेयमिति वाक्यतात्पर्यमिति वाच्यम् , कामसाधनकर्मविषये कामे-
च्छाया एव प्रवर्तकत्वेन निर्बन्धकरणायोगादिति चेत्--उच्यते । यद्यपि जीवन-
काल एवावसर इति स्वत एव सिद्ध्यति; अथापि केचिदौपनिषदीमापात-

प्रतीतिमवलम्ब्य न यावज्जीवं कर्मानुष्ठानं मेनिरे । अपित्वंता विरज्यावस्थानमेवान्ते प्रतिपन्नाः । एवमशुद्धत्वशङ्कयाऽपि केचित्काम्यानुष्ठानमयुक्तमध्यवसितवन्तः । अतः काम्यैकपरपुरुषायुषस्य कृत्स्नस्य कर्मसम्बन्धसिद्धावपि तदितरसम्बन्धि कृत्स्नं पुरुषायुषमियं श्रुतिः कर्मानुष्ठान एव नियमयति । तथा च कुर्वन्नेवेत्येवकारेणायोगव्यवच्छेदरूपनियमार्थकेन तत्तत्कर्मसाध्यकर्मकांण्डोक्तफलविलक्षणस्थिरफलसद्भावादिबुद्ध्यापादितो यः पुरुषायुषस्य कादाचित्कः काम्यकर्मकर्तृसम्बन्धित्वायोगस्तस्य व्यवच्छेदकरणात् कर्मत्याज्यताबुद्धिर्निवर्तते । कृत्स्नस्यायुषः कर्मसम्बन्धः सिद्ध्यतीति सिद्धं नियमपरत्वम् । अत एव नियमादिति पूर्वसूत्रम् ।

ईदृशनियमपरत्वं पूर्वपक्षिसम्मतं स्वीकृत्यैव सूत्रकृद्भिः नाविशेषादित्यनेन तस्य काम्यकर्मविषयकत्वांशमनभ्युपगम्य विद्याङ्गकर्मविषयकत्वमसूचि। अयमत्र भावः—सत्यं नियमः स्वीक्रियते । एवकारार्थश्चायुषः कर्मकर्तृसम्बन्धित्वायोगः केनचिन्निमित्तेन प्रसक्तो यस्तद्व्यवच्छेद एव । तत्र काम्यकर्तृसम्बन्धित्वायोग एव पूर्वोक्तरीत्या समापतितो व्यवच्छिद्यत इति किमस्ति गमकम्? विद्याङ्गकर्मकर्तृसम्बन्धित्वायोग एव श्रुतिषु विदुषः कर्मनिषेधदर्शनेन वा कर्मणां लेपकत्वस्वभावपर्यालोचनया वा प्रसक्तः कस्मान्न व्यवच्छिद्येतेति । एवं च नियमस्वीकारः सूत्रकृदिष्ट इति स्वीकर्तव्यम् । अत एव भगवता भाष्यकृताऽपि 'न चायं नियमः फलसाधनभूतस्वतन्त्रकर्मविषय इति विशेषहेतुरस्ति, विद्याङ्गकर्मविषयतयाऽप्युपपत्ते'रिति स्पष्टं नियमस्वीकारप्रदर्शनेन भाषितम् । व्यासार्यैश्च परमतप्रतिक्षेपावसरे 'स्वतन्त्रकर्मविषयत्वे विशेषाभावात् विद्याङ्गकर्मपरत्वेनापि नियमोपपत्तिरूपतया व्याख्यातुं युक्तमि'त्यवोचि । एवं च यद्यनुमतिपरत्वं मन्त्रस्य, तदैष नियमो न शक्यः स्वीकर्तुम् । अनुमतेः कामचारानुज्ञारूपामन्त्रणात्मकताया भवत एवेष्टत्वेन सामान्यतो विदुष आयुषि कर्मकर्तृसम्बन्धित्वस्यैव

कदाचित् तदयोगस्याप्यभिमतत्वेन तद्व्यवच्छेदरूपनियमासम्भवात् । न हि विष्णुप्रजापत्यग्नीषोमान्यतमदेवताक उपांशुयाजे कदाचिद्विष्णुदेवत्यत्वायोगस्य सम्मतत्वे सत्येव विष्णुदेवत्य एवोपांशुयाज इति प्रयुज्यते । अत एवकारार्थो नियमस्तत्रानुपपन्न एव । अत एवैवकारस्तदा 'न तत्करणे किञ्चिद्बाधकमस्ति' इति बाधकाभावप्रदर्शनपरः । न च विद्वत्संन्यासिगतस्याऽऽयुषोऽग्निहोत्रादिकर्मकर्तृसम्बन्धित्वायोगवत्त्वेऽपि विदुषा गृहस्थेन तदनुष्ठानस्यावश्यकतया तदर्थे आयुषि नियमः शक्योपपादन इति शंक्यम् । विकल्पासहत्वात् । किमत्र जिजीविषेदित्यत्र गृहस्थस्यैव कर्तृत्वेन सम्बन्धः किं वा विद्वत्सामान्यस्य? नाद्यः, तर्हि तेन कर्मणामवश्यानुष्ठेयत्वेन तं प्रति विधानस्यैव युक्तत्वेनानुमतेरसम्भवात् । कर्मविषये करणाकरणयोरुभयोरभावेऽनुमतिकार्यकामचारासिद्धिमाशंक्य गृहस्थेन करणादन्येनाकरणादुभयसिद्ध्या सामान्यतो विद्वांसं प्रत्यनुमतिवचनस्य युक्ततायां अवर्जनीयत्वात् । नान्त्यः अगृहस्थस्यायुष्ययोगस्य सद्भावेन तद्व्यवच्छेदरूपनियमस्य सामान्यतः पुरुषायुषे वक्तुमशक्यत्वात् । अतोऽनन्तरसूत्राभिमतानुमतिरूपार्थादर्थान्तरपरमेवेदं सूत्रम् ।

एवं नियमपरत्वसिद्धौ किं पूर्वपक्षिमत इव वचनान्तरविहितकर्मविषयकनियममात्रपरत्वमुत नियमविशिष्टकर्मविधिपरत्वमिति विमर्शे सिद्धान्ते विद्यार्थतया कर्मविनियोजकवचनान्तराभावेनास्यैव मन्त्रस्य विशिष्टविधिपरत्वमेष्टव्यम् । न च तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेनेत्युपनिषदन्तरवचनात् कर्मप्राप्तिरिति युक्तम् ; स एवं वर्तयन् यावदायुषमिति वचनान्तरेण नियमस्यापि प्राप्तिसम्भवेन तत्रापि तात्पर्यायोगात् । प्रकृतोपनिषद्गम्यत्वं पुनरुभयत्राविशिष्टम् । अतः सिद्धान्ते विशिष्टविधानमेव युक्तम् । कर्ममात्रविधानं वा । अहरहरभ्यासाधेयातिशयाया विद्याया रजस्तमोनिबर्हणद्वारेणोपकारकाणां कर्मणां यावदायुषं प्रतिबन्धक-

सम्भावनयाऽनुष्ठानस्य स्वत एव सिद्धेः । अविहितस्यापि न्यायसिद्धस्यैव नियमस्यैवकारार्थत्वमबाधितमित्याशयानैरेव भाष्यकृद्भिः नियमस्स्वपक्ष उपपादित इति सुवचत्वात् । इदं सर्वमभिप्रेत्य कर्मविधानमिहाचार्यपादैरभाषि । न च सन्न्यासिन आयुषि कथमग्निहोत्रादिकर्मनियमसिद्धिरिति शंक्यं; कर्मपदेनाविशेषेण सन्न्यासिकर्मणोऽपि ग्रहणेन तन्नियमस्य तत्र सिद्धेर्निष्प्रत्यूहत्वात् ।

किञ्च भवदभिमतानुमतिपरत्वं मन्त्रस्य न सम्भवति । सा हि कामचाराभ्यनुज्ञा । सा चेहाविशेषात् गृहस्थयत्यादिसर्वाश्रमिणः प्रतीति वक्तव्यम् । न हि ब्रह्मचारिणं विद्वांसं पुरस्कृत्य त्वया गृहस्थीभूय कर्म वा क्रियतां सन्न्यासमवलम्ब्य न वा क्रियतामित्युपदेशार्थैवायं प्रवृत्त इत्यत्र किंचित् प्रमाणमस्ति । न च भवतोऽपि तदिष्टम् । तथा च गृहस्थस्य सन्न्यासिनश्चैकैकस्य यावत् कामचारो न सिद्ध्यति तावन्न तादृश्या अनुमतेरिह विवक्षा युक्ता । गृहस्थेनावश्यमनुष्ठेयत्वात् सन्न्यासिना चाननुष्ठेयत्वान्नास्ति कस्यापि कामचारः । किं तु गृहस्थविषये विधायकत्वमन्यविषये निषेधकत्वमिति वाक्यस्यैकस्य कृत्यद्वयमेवापतति । ननु यो गृहस्थो भूत्वा कर्माण्याचरितुं कामयते सोऽत्रानुमन्यत इति चेत् तर्हि न वानप्रस्थसन्न्यासिनोरिह ग्रहणमिति विद्वत्सामान्यविषयकत्वमिष्टं न सिद्ध्यति । न हि तयोर्गार्हस्थ्यं शक्यमेषितुम् । माकाममिति चेत् तर्हि तयोर्ब्रह्मचारिणश्च विद्याङ्गकर्मावश्यकत्वमनुक्त्वैव विद्यां चाविद्यां चेति तद्विषयेऽपि कर्मसमुच्चयवर्णनं कथं घटताम् । न च तत्रापि तदविवक्षा । गृहस्थं प्रत्येवेयमुपनिषदित्यत्र प्रमाणाभावात् । न च तत्रैव तत्कर्मविधानमिति युक्तम् । एकस्याविद्यापदस्य गृहस्थीयकर्मविषयेऽनुवादकत्वमन्यदीयविषये च विधायकत्वमिति वैरूप्यप्रसङ्गात् , विद्यावदविद्याया अपि प्राप्तत्वस्यैव युक्तत्वाच्च । उपनिषदन्तरेण तेषां प्राप्तं कर्म तत्र समुच्चीयत इति चेत् गृहस्थस्यापि न किं तदिति वृथैवायं मन्त्रः । अपि च यस्यानुमत्यर्थ-

मयं मन्त्रः, स पुरुषः किं स्वयमेव कामनया कर्मानुष्ठाने प्रवृत्त इहानुमन्यत उताप्रवृत्तः ? नाद्यः, तस्य कर्मलेपकत्वशङ्कासत्त्वे प्रवृत्त्ययोगात् ; असत्त्वे च तं प्रति न कर्म लिप्यते नर इत्युपदेशस्यायोगात् । नान्त्यः, तथा सति कामचारस्याभावेन कस्याऽनुज्ञा । वचनेनैव तत्प्रवृत्तेर्वक्तव्यत्वेन विधिरेवेति कुतोऽनुमतिपक्ष इति । ननु मानान्तरप्रवर्तितस्य पुंसः कर्मलेपकत्वशङ्कापरिहारार्थमेवायं मन्त्र इति न कर्मविधानमिहेति चेत् न । जिजीविषेदिति लिङो विध्यर्थकत्वमनुमत्यर्थकत्वं वेत्येतावत एव विचार्यमाणत्वात् । विधेश्च प्रमाणान्तरप्रमितत्वेऽनुवाद इह भविष्यति, न चेदपूर्वग्रहणमिति यथाकथञ्चिद्विधिरेवार्थो नानुमतिः, उक्तप्रकारेणानुपपन्नत्वात् । किञ्चैवं सति 'न कर्म लिप्यते नर' इत्यस्यैवाज्ञातार्थज्ञापकत्वमित्यन्यःसर्वोऽपि तद्वाक्यशेषःस्यात् । न च तदपि सम्भवति ; तस्य तुरीयपादार्थस्य न्यायसिद्धत्वेन वचनानपेक्षणात् । अनेकफलसाधनेष्वपि कर्मसु यो यत्फलमुद्दिश्य कर्म कुरुते तस्य तदेकमेव फलं भवति, नान्यत् । यत्रापि सर्वाणि फलान्येकेनैव पदेन गृहीत्वा तेषामेककर्मसाध्यत्वमुच्यते यथा 'सर्वेभ्यो दर्शपूर्णमासा'वित्यत्र तत्राप्येकैकमेव फलमिति कः परत्र प्रसङ्गः । तदिदं सर्वं चतुर्थतृतीये स्थितम् । ततश्च विद्याङ्गकर्मानुष्ठायिना विद्योपकारात्मन एव फलस्य कामितत्वात् स्वर्गादेः कामितत्वे च तदलेपस्य तदनिष्टत्वेन कथनायोगात् स्वर्गादिलेपाद्भीतस्य च तस्य स्वर्गादिकामनाया वर्णनासम्भवान्न स्वर्गादिलेपप्रसङ्ग इति न्यायसिद्धानुवादितया तुरीयपादस्य प्राधान्याभावादुपनिषदन्तरविहितत्वेऽपि कर्मणः प्रतिपत्तृभेदमाश्रित्येहापि विधानं स्वीकृत्य तद्वाक्यशेषत्वमेवोत्तरार्धस्य विवक्षित्वा मन्त्रसार्थक्यं सम्पादनीयमिति ।

ननु कर्मकाण्डेऽग्निहोत्रादिगृहस्थकर्मणामेव प्रस्तुतत्वेन तेषामेव कर्मपदेन ग्राह्यत्वात् सर्वविद्वत्साधारण्येन न तद्विधानसम्भव इति चेत् तर्हि

यजेत स्वर्गकाम इत्यादावप्याख्यातोपात्तसर्वपुरुषोद्देशेन यागविधानासम्भव इति तत्र यागाद्यनुमतिरेव कर्तव्या स्यात् । तथा च गृहस्थविषये तदावश्यकत्वमन्यविषये तदभावश्च सिद्ध्यत इति न यागविधानमभ्युपेतुं शक्यम् । एवं ब्राह्मणा विविदिषन्ति यज्ञेन दानेनेत्यादावपि न विधिः सम्भवति । तत्रापि गृहस्थेतरब्राह्मणस्याप्यविशेषेणोक्तत्वात् । अन्ततः प्रायेण कुत्रापि विधानदुर्भिक्षमेव । ननु तर्ह्यप्राप्तविषये कथमनुमतिः स्यादिति चेत्तद्भवतैवाऽऽलोचनीयम् । ननु यजेत स्वर्गकाम इत्यादावाख्यातस्य साधारणत्वेऽपि अग्निविद्यादिमदधिकारिणैव यागस्य कर्तुं शक्यत्वात् तादृशकर्त्रन्वयस्याङ्गीकार्यतया तं प्रति विधानमुपपद्यत इति चेत्तर्हीहाप्यग्निहोत्रादीनामेव प्रस्तुतत्वे तत्करणशक्ताग्न्यादिमत्पुरुषस्यैव कर्तृत्वेनान्वयस्य वाच्यतया तथैव विधानं सम्भवति , वक्तव्यं चेति कथं विधिपरत्वत्यागः ।

किञ्च गृहस्थकर्ममात्रस्य कर्मपदेन ग्रहणमित्यत्र न प्रमाणम् ; कर्मपदस्य साधारणत्वेनाश्रम्यन्तरकर्मणोऽपि ग्रहणसंभवात् । प्रकृतपूर्वभागोक्तकर्मणामेव ग्रहणमिति पक्षे वेदान्तरशाखान्तरविहितगृहस्थकर्मग्रहणप्रसङ्गः । तस्मादविद्वत्त्वस्य सर्वेष्वाश्रमिषु सम्भावितत्वेन तदीयकर्मणां विद्याङ्गत्वेन विधानमिति नाश्रमिभेदेन करणाकरणोभयसिद्ध्यर्थमनुमतिपरत्वमभ्युपेत्यम् । यदि पुनरेवं शङ्क्येत— काम्यकर्मणामग्निहोत्रादीनां गृहस्थाधिकारिकत्वेन तत्रैव लेपशङ्कायां न कर्म लिप्यते नर इति स्वीकर्तव्यमिति यस्य कर्मणो लेपकत्वप्रसक्तिस्तस्यैव पूर्वमपि कर्माणीति पदेन ग्रहणं युक्तमिति नागृहस्थकर्मविधानं युक्तमिति , तत्राप्युच्यते । गृहस्थकर्मणामेव लेपकत्वसम्भावनेति न नियमः । कर्मत्वाविशेषात् गृहस्थकर्मण इवान्यस्यापि लेपकत्वमेवेति शङ्कासम्भवात् । 'अनुष्ठेयं बादरायणः साम्यश्रुतेः' इत्यत्र भाष्यकृद्भिः "ब्रह्मनिष्ठाविकलाः केवलाश्रमिणः पुण्यलोकभाजः । तेष्वेव ब्रह्मनिष्ठोऽमृतत्वभाक् भवति । तदेतद्विस्पष्टमुक्तं पराशरेण 'प्राजापत्यं ब्राह्मणानाम्' इत्यारभ्य

'ब्राह्मं संन्यासिनां स्मृत'मित्यन्तेने''ति भाषितत्वेन सन्न्यासकर्मणामप्यर्वाचीनफललेपकत्वशङ्कायाः सम्भावितत्वाच्च । अर्थवादघटकतुरीयपादस्योक्तसकलाश्रम्यन्तर्गतगृहस्थकर्मरूपैकदेशविषयकशङ्कापरिहाररूपत्वेऽपि बाधकाभावेन तदर्थं प्रथमश्रुतकर्मपदस्यासङ्कोचन्यायसिद्धाशेषग्राहकत्वभङ्गायोगाच्च । इह कर्माणीति बहुवचनेन तत्र कर्मेत्येकवचनेन विधायकवचनं बहुविषयकं लेपवचनं च किञ्चिद्विषयकमिति प्रतीयमानत्वाच्च । अन्यथा गृहस्थकर्तृकनित्यनैमित्तिकाग्रहणप्रसङ्गाच्च ।

लिङोऽप्यनुमतिपरत्वे लक्षणा विधिपरत्वे च शक्यार्थग्रहणमित्यतोऽपि नानुमतिपरत्वम् । यद्येवं विधिपरत्वमेव युक्तम् , अनुमतिपरत्वं चासंभवि ; कथं तर्हि स्तुतयेऽनुमतिर्वेति सूत्रम् । उच्यते, भवदभिमतानुमतिपरत्वमेव प्रत्याख्यायते, न सूत्रकृदभिमता याऽनुमतिस्तत्परत्वमपि । तदनन्तरमेव वक्ष्यते । सम्प्रति सूत्रद्वयस्यैकार्थ्यव्युदसनं क्रियते ।

यत्पुनरनन्तरसूत्रावतरणभाष्यमर्थैक्यसाधकमिति; तन्न ; पूर्वपक्षिणो लिङो विध्यर्थकत्वस्यैवेष्टत्वात् तदप्रदूष्य कर्मपदसाधारण्यमात्रस्य पूर्वसूत्रोक्तत्वात् अनुमत्यर्थकत्वस्य पूर्वसूत्राभिप्रेतत्वे च 'लिङो विध्यनुमत्युभयसाधारणत्वेन विधिपरत्वे विशेषहेत्वदर्शनात्' इत्यपि भाषणीयत्वप्रसङ्गात् अर्थस्वाभाव्येनेति पदस्य विद्यायाः कर्मेतिकर्तव्यताकत्वरूपस्वभावेनेत्यर्थकत्वात् तेन विद्याङ्गकर्मविषयतयापीति भाष्येण च कर्मपदस्य विद्याङ्गकर्मविषयकत्वस्य संप्रतिपन्नत्वात् तद्विषये पुंसः प्रवृत्तत्वाप्रवृत्तत्वविकल्पादिनाऽनुमत्यर्थकत्वासम्भवस्य प्रागुपपादितत्वाच्च विध्यर्थकत्वस्वीकारस्यैव पूर्वसूत्रे निश्चिततयाऽर्थभेदस्यावश्याश्रयणीयत्वात् । 'चोद्यं परिहृत्य वाक्यस्यार्थमाहे'ति भाषणं च पूर्वसूत्रस्यैव नञ्घटितत्वेन तदर्थसाधकहेतुवाचकपदघटितत्वेन च परिहारकत्वात् पूर्वपक्ष्यर्थस्यैव स्वयं किञ्चिदंशपरिष्करणेन स्पष्टत्वेन स्वयमुक्तार्थस्य कस्यचित्तत्राभावात् , अत्रैवार्थस्य स्वयं वचनाच्चोपपन्नम् । यदि पुनरन-

न्तरसूत्रोक्तार्थ एव तत्राप्यभिमतस्स्यात् तर्ह्यनन्तरसूत्रकरणवैयर्थ्यं च । विद्याङ्गकर्मविषयकत्वांशस्य पूर्वसूत्रेणैवोक्तत्वेनाभिमतार्थवर्णनस्य सुकरत्वेन पृथक्प्रयत्नस्यानावश्यकत्वात् । नाविशेषात् स्तुतयेऽनुमतिर्वेत्यैकसूत्र्यमेव वा भाष्यकृद्भिरेषितव्यं स्यात् । न च शङ्काविशेषपरिहारपरतया तत्सार्थक्यम् । अदर्शनात् । न च न कर्म लिप्यते नर इति वाक्यशेषप्रदर्शनार्थं तदिति विमृश्यम् ; तथा सति यथा 'चमसवदविशेषा'दिति सूत्रेण 'अजामेकां लोहितशुक्लकृष्णाम्' इत्यत्र केवलतन्त्रसिद्धप्रकृतिग्रहणे विशेषहेत्वप्रतीतिरित्युक्त्यैव प्रकृतेर्ब्रह्मात्मकत्वस्य सिद्धतया ज्योतिरुपक्रमात्त्विति सूत्रं विशेषहेतुसद्भावप्रदर्शकम् , न तु ब्रह्मात्मकत्वज्ञापनतत्परम् , तथा प्रकृतेऽप्यविशेषवचनादेव विद्याङ्गकर्मानुमतेस्सिद्धतया स्तुतये इति सूत्रं वाक्यशेषप्रदर्शनपरं न मन्त्रार्थबोधनतत्परमित्येव वक्तव्यतया, यथा तत्र ज्योतिरुपक्रमात्त्वित्येतावत्यनुपरम्य तथा ह्यधीयत एक इत्यधिकं सूत्रितम् , तद्वदिहापि स्तुतयेऽनुमतिर्वा तथा हि वाक्यशेष इति सूत्रणीयत्वप्रसङ्गात् । भाष्यकारैश्च वाक्यस्यार्थमाहेत्यवतरणं विहाय तत्रैव अनुमत्यर्थग्रहणे विशेषहेतुरस्तीत्याहेत्यवतरणस्य भाषितव्यत्वप्रसङ्गात् । अतः सूत्रतदवतरणस्वारस्याद्र्थमात्रकथनपरत्वमेव संमन्तव्यम् । तच्च पूर्वसूत्रस्याप्येतदर्थतात्पर्यकत्वे पृथक्सूत्रकरणवैयर्थ्यापत्त्या न युक्तं स्यात् । वाक्यस्यार्थमाहेति भाषितं च पूर्वसूत्रस्य निगूढार्थस्य पूर्वपक्षिणैवोक्तत्वेन स्वोक्तत्वाभावात् स्वेन तत्र मात्रया परिष्कारमात्रस्य कृतत्वात्स्वमतविरोधाभावेन सम्भवमात्रेण तस्याप्यर्थस्याङ्गीकृतत्वात् स्वाभिमतार्थान्तरस्यैवात्रैव कथ्यमानत्वादुपपद्यते ।

यदपि वाशब्दोऽवधारण इति भाष्यव्याकोप इति तदपि न । नाविशेषादित्यत्रार्थान्तरस्य विवक्षितत्वे कोऽर्थो भाषितव्यः । पक्षान्तररूपश्चेत् तर्हि सूत्रद्वयविवक्षितार्थद्वयस्य तुल्यबलत्वमापद्येत । अस्त्विति चेन्न । तथासति नाविशेषादिति सूत्रेणैव विद्याङ्गकर्मविधिपरत्वं वा विद्यास्तुत्युपयोगिकर्मानु-

मतिपरत्वं वा विहाय काम्यकर्मविधिपरत्वमेवेत्यत्र विशेषहेत्वभावान्नैवमित्य-र्थवर्णनेनैतत्सूत्रार्थस्यापि ग्रहणसम्भवेन पृथक्सूत्रप्रणयनवैयर्थ्यात् । न हि विद्याङ्गकर्मविधिवाचि किमपि पदं पूर्वसूत्रेऽस्ति येन तस्येदृशार्थपरत्वं बाध्येत । विद्यास्वाभाव्यपर्यालोचनया तादृशकर्मविधिग्रहणे च तद्बलेनै-वानुमतिग्रहणमपि संभवति । न चैतत्सूत्राविवक्षितार्थ एव तत्र निगूढ इति भवदुक्तं युक्तम् । असम्भवसूत्रवैयर्थ्यादेः प्रागेवोक्तत्वात् । किं च तुल्यबलत्वेऽनुमतिपरत्वमेव तत्र विवक्षित्वा विद्याङ्गविधिपरत्वख्यापनायैव किमिति सूत्रं न प्रणीतं स्यात् उभयख्यापनाय वा । अतस्तुल्यबलत्वसंमत्य-सम्भवात् पूर्वसूत्रेण किञ्चिद्दुर्बलमेव पक्षं परिगृह्य पूर्वपक्षं प्रतिक्षिप्य प्रबलं पक्षमनन्तरेणाहेति स्वीकर्तव्यम् । तथा च सूत्रद्वयसार्थक्यम् । एवं च न पक्षान्तरपरत्वसम्भवः । तर्हि पक्षव्यावृत्त्यर्थकत्वं वाकारस्य किमिति न भावितमिति चेत् किमवधारणार्थकत्वे पक्षव्यावृत्तिर्न भवतीति भवदभि-प्रायः ? अवधारणं ह्यनेककोटिकसंशये सति विमृश्यैकतरकोटिनिश्चयः । तेन च कोट्यन्तरं व्यावर्त्यत एव । ननु यावत्कोटिविषयकः संशयस्ताव-दन्तर्गतैकतरकोटिकमेवावधारणं भवति । इह तु काम्यकर्मविधिर्वा विद्या-ङ्गकर्मविधिर्वेति कोटिद्वयग्राहिसंशयेऽनुमतिकोटेरविषयत्वेन कथमित्थमवधा-रणमिति चेन्न । पुरोवर्तिनीं रज्जुमवलोक्य किमिदं भूदलनमम्बुधारा वेति कोटिद्वयसंशयेऽप्युपपत्तिबलेन रज्जुरित्यन्यदेवेत्यवधारणसम्भवात् । अनुम-तिपक्षस्य प्रकृतसूत्रोक्तत्वेन तद्बलेनास्या अपि कोटेः संशयविषयत्वस्वीकारेण बहुकोटिकः संशयः प्रकृत इति सुवचत्वाच्च । अतो नावधारणरूपार्थस्य पूर्वसूत्रेऽर्थान्तरविवक्षाबाधकत्वम् ।

इदमत्र स्यात्—चकारतुकारवाकाराणां यत्र साध्यांशवाचिपदसम-भिव्याहारः, तत्र कोट्यन्तरव्यावर्तनेन समभिव्याहृतपदार्थरूपकोट्यवधारणप-रत्वस्य वक्तुं शक्यतयाऽवधार्यमाणवाचिपदसमभिव्याहारेऽवधारणमर्थ इष्यते ।

यथा 'आदित्यादिमतयश्चाङ्ग उपपत्तेः,' 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च, स्तुतयेऽनुमतिर्वे' ति । यत्र तु साध्यान्वयाविवक्षया साध्यवाचिसमभिव्याहाराभावः तत्रार्थान्तरपरत्वम् । तत्र च सिद्धान्तप्रथमसूत्रस्थत्वे पूर्वपक्षनिराकरणारम्भात् पक्षव्यावृत्त्यर्थकत्वम् । यथा—'भोगेन त्वितरे क्षपयित्वाथ सम्पद्यते,' 'विज्ञानादिभावे वा तदप्रतिषेध' इत्येवम् । गुणसूत्रान्तःपाते न चोद्यसंभवे तद्व्यावृत्त्यर्थत्वम् । यथा— "कृत्स्नभावात्तु गृहिणोपसंहारः" 'बहिस्तूभयथापि स्मृतेराचाराच्चे'त्येवम् । एवमवधारणवाचिपदान्तरसत्वेऽपि तद्विवक्षापरत्वासंभवात्पक्षव्यावृत्त्यर्थत्वमिष्यते । यथा—"अन्तरा चापि तु तद्दृष्टेः" "विद्यैव तु निर्धारणाद्दर्शनाच्च" "मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वा" दित्येवम् । तत्रावधारणपराणां चकारैवकारमात्रपदानां सत्वात् । एवं साध्यवाचिसमभिव्याहाराभावेपि यत्समभिव्याहारोस्ति तेन सह सत्यन्वययोग्यत्वे तदनुगुणोर्थ इष्यते । यथा "अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शना" दित्यत्र । तत्र तुशब्दस्तुक्तान्तरेभ्यो विशेषणार्थ इति भाषितत्वात् । 'पूर्ववद्वे'ति सूत्रेऽवधारणसम्भवेऽप्यहिकुण्डलवद्भावशङ्काप्रसङ्गपरिहाराय पक्षद्वयव्यावृत्तिरूपार्थाभिधानम् । एवं यथासम्भवमूह्यम् । ततश्च पक्षान्तरपरत्वासम्भवादवधारणार्थकत्वेऽप्यवधार्यमाणेतरव्यावृत्तिसिद्ध्या साध्यवाचिसमभिव्याहारबलेन तत्स्वीकारस्योचितत्वाच्च वा शब्दोऽवधारणार्थ इत्यभाणीति न तस्य पूर्वसूत्रेऽर्थान्तरविवक्षाबाधकत्वम् ।

तथा मध्यस्थकृत**नयमयूखमालिकायां** 'न विद्यायाः कर्माङ्गत्वसिद्धिः, नियमस्य विद्याङ्गकर्मविषयतयाऽप्युपपत्तेः । वस्तुतस्तु विद्यास्तुतये कर्मानुमतिरेवेय'मिति वाक्यमपि सूत्रयोरभिप्रेतमर्थमेवं स्पष्टयति ।

नन्वस्मदुक्तानुमतिपरत्वस्य दूषितत्वाद्विद्याङ्गकर्मविधिपरत्वस्य च सोपपत्तिकं साधितत्वात् कथमनन्तरसूत्रघटनेति चेत्—उच्यते । मन्त्रस्य विद्याङ्गकर्माविषयकत्वे विधिरेव युक्तो न त्वनुमतिः सुवचेत्युक्तम् । तथा

तद्विषयत्वे स्तुतय इति स्तुत्युक्तिरपि न घटते । न हि विद्यां प्रति कि-ञ्चिदङ्गवचनाद्विद्या स्तुता भवति । न च विद्याङ्गकर्मणां लेपकत्वाभावस्य विद्यामाहात्म्यायत्तस्य कथनात् सा स्तुता भवतीति वाच्यम्, तस्य तदाय-त्तत्वाभावात् । यदि विद्यामाहात्म्यात्तेषामलेपकत्वम् , तर्हि विदुषा फलाभिसन्धिपूर्वकं क्रियमाणानामप्यलेपकत्वप्रसङ्गः । तथा च वृष्ट्यन्ना-द्यर्थकर्मोद्यमोऽपि वृथैव स्यात् । अथ तत्र फलाभिसन्धेस्सद्भावेन लेपक-त्वमिति चेत्तर्हि तत्त्यागादेवालेप इति त्याग एव स्तोतव्यो न विद्या । युक्त-तरं चेदं भवतः प्रथममन्त्रस्य त्यागविशेषविधान एव निर्भरमभिदधानस्य, यत् अनन्तरमन्त्रेण प्रथममन्त्रविहितत्यागस्तवनम् । न पुनर्विद्यास्तवनम् । अस्तु तथैवेति चेद्भाष्यव्याकोपः । यदि पुनः प्रथमस्य त्यागविधायित्वममं-स्यन्त भाष्यकृतः, तदा तस्यैव स्तवनमभ्यधास्यन्त । अतो ज्ञायते प्र-थमस्यापि भवदभिहितोऽर्थो भाष्यकृदाशयविरुद्ध इति । न च यद्यपि त्यागमाहात्म्यायत्तमेवालेपकत्वं तथाऽपि सेनासम्पादितविजयस्य सार्वभौम इव त्यागरूपाङ्गगतमाहात्म्यस्याङ्गिनि विद्यायामारोपणमनुचितं न भवतीति वाच्यम् । तद्गतमेव माहात्म्यं पुरस्कृत्य तस्यास्स्तवनसम्भवेन कर्मानुबन्धित्या-गगतस्य महिम्नस्त्यागं तदङ्गिकर्म च विहाय तदङ्गिन्यारोपादिना स्तवनस्या-नुचितत्वात् । न च विदुषैव त्यागः क्रियत इति नियमोऽस्ति । विद्याधि-गमात् प्रागपि ज्ञानयोगकर्मयोगाद्यनुष्ठानावसरे प्रपत्त्यनुष्ठानात् प्राचीनेऽर्वा-चीने चावसरे सात्त्विकत्यागपुरस्सरमेव कर्मणामनुष्ठानात् । अतो ना-स्मादलेपकत्वाद्विद्यास्तुतिर्भवति । किञ्च विद्याङ्गानां कर्मणामलेपकत्वमेव न भवति । यदर्थं तेषामनुष्ठानं तस्य कार्यस्य विद्यानिष्पादनरूपस्य लेपा-वश्यम्भावात् । न चाप्युपकाररूपेणाङ्गफलेन लेपस्य ध्रौव्येऽपि अनिष्टस्व-र्गाद्यर्वाचीनफललेपाभावमात्रेण तदुक्तिरिति वाच्यम् । अस्या अपि वाचो-

न्यायानुक्तिसिद्धत्वेनायोगात् ; अनुद्दिष्टफललेपाभावस्य न्यायसिद्धताया

नागुक्तत्वात् । न हि पश्वर्थो ज्योतिष्टोमः पुत्रफलं पुरुषे लिम्पति । अतो विदितार्थानुवादाय मन्त्रप्रवृत्तिरयुक्ता । वरञ्चेदमपेक्ष्य पूर्वपक्षिसम्मतस्यैव स्वीकरणम् । तेन हि न कर्म लिप्यत इतीदं कतिपयकाम्यकर्मसम्भावितहिंसादर्शनशङ्कितपापप्रतिक्षेपार्थत्वेन योजितम् । तत्र च न हिंस्यादिति निषेधस्य जागरूकत्वेन विना वचनमपापत्वावगतेरसम्भवेन 'न वा उ एतन्म्रियसे न रिष्यसि' इतिवदिहाप्युपनिषदि वचनप्रवृत्तिसम्भवात् । सिद्धान्तेऽपि तादृशविद्याङ्गकर्मानुष्ठाने तादृशहिंसावसरस्यानवगतत्वेन शङ्कावर्णनसम्भवाच्च । विद्याप्रकरणे काम्यकर्मग्रहणासम्भवाद्विद्याङ्गग्रहणेऽपि पूर्वपक्ष इवार्थवर्णनस्य सुकरत्वाच्च पुनः पूर्वपक्षो निरस्तः, न तु न कर्म लिप्यत इत्यस्य स्वमते स्वारस्यपर्यालोचनात् । अथ सांख्योक्तरीत्या हिंसागर्भाणामशुद्धत्वसंभावनायामपि भाट्टप्रदर्शितदिशा तत्रोत्सर्गापवादन्यायसञ्चारेणेन पापलेपाभावप्रत्ययसम्भवादयमर्थो न्यायसिद्धो न वक्तव्यः । किञ्च कर्माणीति पदेन यावतां ग्रहणं तावत्सु हिंसागर्भकतिपयमात्रग्रहणेनालेपवचनमपि न स्वरसम् । अपि च नित्य-काम्य-विद्याङ्गनिखिलप्रयोगसाधारणीयमाशङ्का पूर्वं कर्मविधानावसरे एव परिहर्तव्या, न पुनर्विद्यायां विशिष्य विनियोजनावसरे । अतो नैतद्वरमिति चेत्—तर्ह्यनयाऽपि प्रक्रियया विद्याङ्गग्रहणं न सम्भवतीत्येव सिद्ध्यति । अतश्च कयाऽपि विधया विद्यास्तुत्यसम्भवादनुमत्युक्त्यसम्भवाच्च सूत्रस्य विद्याङ्गग्रहणविरोधित्वाद्वाशब्दार्थावधारणस्यान्यथा सिद्धत्वाच्च नाविशेषादिति सूत्राभिप्रेतादन्य एव स्तुतय इति सूत्रनिगूढोऽर्थः ।

कः पुनरसावर्थ इति चेदुच्यते । कर्म हि त्रिविधं विहितं प्रतिषिद्धमविहिताप्रतिषिद्धं चेति । तत्र विहितं नित्यनैमित्तिककाम्यभेदेन त्रिविधम् । त्रिविधमपि प्रयोगभेदेन विद्याङ्गमनङ्गं च । काम्यं प्रतिषिद्धं च किंचित् प्रयोगभेदेन बुद्धिपूर्वकमबुद्धिपूर्वकं च । तत्र नित्यनैमित्तिकयो-

विद्यानङ्गत्ववेषेण विदुषि न प्रसक्तिः । काम्यं तु फलमनभिसन्धाय विद्योद्देशेनैव विद्योपयिकवृष्ट्यन्नादिफलार्थतयाऽपि क्रियमाणतयाऽङ्गभूतमिवानङ्गभूतमपि सम्भवत्येव । एवं याद‍ृच्छिकसुकृतमप्यबुद्धिपूर्वकम् ; तथा द्विविधं प्रतिषिद्धमपि । तत्र विद्याङ्गभूतानां नित्यनैमित्तिककाम्यानां विद्योपकाररूपफलप्रेपकत्वमवश्यम्भावि । तथा प्रतिषिद्धेऽपि बुद्धिपूर्वकस्य । तदधिगमाधिकरणे प्रामादिकमात्राश्लेषस्य भावितत्वात् । विद्यानङ्गं तु काम्यं यद्यपि वृष्ट्यन्नादिसाधनीभूय लेपकं भवति, तथाऽपि न सर्वम् । कृतेष्वपि कतिपयैरेव विद्योपक्षितसिद्धावन्येषामश्लेषस्य भापितत्वात् । तथा च कुर्वन्नेवेत्यत्र यदि बुद्धिपूर्वककृतिरेव विवक्षिता तर्हीद‍ृशकाम्यमात्रग्रहणम् । यद्यबुद्धिपूर्विकाऽपि सुग्रहा तदा याद‍ृच्छिकसुकृतानामनपेक्षितफलानां प्रामादिकानां च प्रतिषिद्धानां सह ग्रहणम् । एतज्जन्यफललेपाभावश्च मानान्तरासिद्धो वैदिकसमधिगम्यः, 'तस्यैवात्मा पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेने'ति सरूपश्रुताविवेहाप्युच्यते । अयं च विद्याबलायत्त एव । न पुनः पूर्व इव परायत्तः । एषां च कर्मणां विधानासम्भवात्, यदि क्रियेत तावता न भेतव्यमित्यनुमतिरेवेति भवति स्तुत्यनुमत्युपपत्तिः, तुरीयपादस्वारस्यं च । इदमेव स्वारस्यं मनसिकृत्य वाक्यशेषं प्रदर्शयन्ति स्म भाष्यकृतः । अत एवास्मिन् सूत्रे कर्मेति केवलमभाषिषत , न पुनर्विद्याङ्गकर्मेति । अयमेवार्थः अर्थान्तरं च प्रकरणाविरुद्धमित्याचार्यपादैरभाषि । प्रकरणाविरुद्धमित्यस्यायं भावः—पूर्वपक्ष्यर्थे प्रकरणविरोधोऽस्ति । अस्मिन्नर्थे तु पूर्वसूत्राभिमतार्थ इव नास्ति प्रकरणविरोध इति । अथ वा विद्याङ्गकर्मग्रहणे प्रकरणविरोधः वाक्यशेषासामञ्जस्यात् । एवं याद‍ृशं काम्यकर्मकरणं पूर्वमेव सिद्धं ताद‍ृशमेव कुर्वन्नेवेत्यनुवादरूपेण वाक्येन प्रतीयते इत्यप्यत्र द्योतितम् । अस्मिन्नर्थे चास्य मन्त्रस्यावतरणमित्थं भाष्यम्—ननु तेन त्यक्तेनेति त्यागोक्तावपि तृतीययोपलक्षितत्वस्याप्ययुक्तत्वात् तेन च

"वाशब्दोऽवधारणार्थः। ईशावास्यमिदं सर्वमिति विद्याप्रकरणाद्विद्यास्तुतये सर्वदा कर्मानुष्ठानानुमतिरियम्। विद्यामाहात्म्यात् सर्वदा कर्म कुर्वन्नपि न लिप्यते कर्मभिरिति विद्या स्तुता भवति। वाक्यशेषश्चैतदेव दर्शयति "एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नर"इति। त्वयि ब्रह्मविद्याधिकारिणि एवमेवानुष्ठेयार्थः, इतोऽन्यथा नास्तीति व्यतिरेकेणोक्तं दृढीकारार्थम्। ननु ब्रह्मविदोऽपि कर्मा-

---

ब्रह्मविद्योपयोगिष्वंशेषु तत्तद्वस्तुविनियोजनस्यापि सिद्धेर्नित्यनैमित्तिककाम्येषु यथासम्भवं विनियोजने क्रियमाणे, यदि, विघ्नभूयस्त्वभ्रान्त्या प्रबन्धा बहूनि मङ्गलानीव, प्रतिबन्धकभूमानं सम्भाव्य, अप्रयत्नभाविष्वपि वृष्ट्यन्नादिलाभेष्वनवबुद्ध्य चानन्तानि काम्यानि कुर्याम, तथा 'यदेव विद्ययेति ही' त्युक्तरीत्या प्रतिबन्धकप्रवृत्त्या न तदात्व एव कृतानां फलान्यनुभूयेरन् तदा 'नाभुक्तं क्षीयते कर्मे' ति प्रमाणानुरोधेन फलानुभवस्यावश्यकतया न झटिति विद्याफलप्राप्तिस्स्यात् । तथा यदृच्छासुकृतानि स्वयमापतन्ति बध्नीयुः। एवं मागृधः कस्यास्विद्धनमिति निषिद्धवर्जनस्यावश्यकताविधानात् बुद्धिपूर्वकस्य कथञ्चित् परिहारेऽप्यबुद्धिपूर्वकस्यानन्तस्याऽऽपतितस्यानुभवावश्यम्भाव इत्येवं बिभ्यतः प्रति विद्यामाहात्म्यमुपदिशत्ययं मन्त्रः। तानि कर्माणि नैव क्रियन्ते चेन्न किञ्चित् । यदि क्रियन्ते अथापि न भेतव्यम्। अत्रापि पक्षे एवकारस्यायोगव्यवच्छेदोऽर्थः। करणायोगव्यवच्छेदानुमतिः क्रियते । अनुमतिबलात् तुरीयपादबलाच्च बाधकाभावज्ञानमिति न भवदुक्तानुमतिपक्ष इवैवकारस्य तदर्थासम्भवः । अत एव 'सर्वदा कर्म कुर्व'न्निति भाषितम्। यदि पुनरस्मिन्नपि विद्याङ्गकर्माण्यपि गृहीत्वा तेषु स्वर्गाद्यनिष्टलेपकत्वाभावः कथमपि विवक्षितुं शक्यस्तर्हि कामं गृह्यन्ताम्। पूर्वसूत्रे विद्याङ्गकर्ममात्रग्रहणम्, इह पुनरन्येषां ग्रहणमावश्यकमित्यर्थभेद एवेत्यत्रैवास्माकं निर्भरः । कस्मादिममर्थमनुसृत्यापि मन्त्रमाचार्या न व्या-

**नुष्ठानभावाद्बन्धस्स्यादित्यत्राह न कर्म लिप्यते नर इति । प्रस्तुते ब्रह्मविदि नरे "अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्" इति विनियोगपृथक्त्वन्यायेन कर्म न स्वर्गादिफलहेतुर्भवति। विद्यानुपयुक्तकाम्यानां निषिद्धानां च विरक्तेन विवेकिना न बुद्धिपूर्वोपादान-**

---

चख्युरिति चेत् पूर्वार्थस्य पूर्वपक्षसूत्रोक्तस्य सिद्धान्तेऽस्पष्टत्वेन वक्तव्यत्वात् द्वितीयरीत्या च भाष्यप्रदर्शनेनैव व्याख्याततया वृथा विस्तरवर्जनस्वाभाव्यान्न पृथक्प्रायतिषत । अर्थद्वयशेषभूतेन विद्याऽनुपयुक्तेत्याद्युत्तरभाष्येण विदुषो वास्तवस्थितिशोधनेन चार्थद्वये ग्राह्यपरिहार्यकर्मविवेचनाच्चार्थवर्णनरीतिः स्फुटति । अस्मिंश्चार्थे न कर्म लिप्यते नर इत्यत्रैव मन्त्रतात्पर्यात् तदर्थमेव मानान्तरसिद्धस्य कर्मणः पूर्वार्धेनानुमन्यमानत्वात् यत्र तात्पर्यं तद्दृढीकारस्यैव युक्तत्वेनोत्तरार्धस्य पूर्वशेषत्वाभावात् 'न कर्म लिप्यते' इतीतोऽन्यथा नास्तीति श्रुतप्रकाशिकोक्ता योजना ग्राह्या । एवमेकान्वयस्य विवक्षितत्वादेव भाष्यकृद्भिर्वाक्यशेषश्चैतदेव दर्शयतीत्यनन्तरं कृत्स्नमुत्तरार्धमुपात्तम् । न तु न कर्म लिप्यते नर इत्येतन्मात्रम् । अत इह वाक्यशेषान्तर्भावस्यैवंपदे भाषितत्वादेव तस्य पूर्वार्धान्वयित्वं यत् भवदुक्तं तदप्ययुक्तम् । सर्वमिदमभिप्रेत्य पूर्णं भाष्यमिहाचार्यपादैरुद्धृतम् । कथं तर्हि प्रागस्मत्पक्षदूषणावसरे श्रुतप्रकाशिकायोजना नाङ्गीकृतेति चेत् भवदीयमन्त्रावतारिकादिपर्यालोचने पूर्वार्ध एव मन्त्रतात्पर्याभिमतेः स्पष्टत्वात् तस्मिन् पक्षे आचार्यकृतस्वरसयोजनैव ज्यायसीति न योजनान्तरमङ्गीकृतम् । तस्मात् सर्वथा सुयोजेऽस्मिन् भाष्ये यथावस्थितसूत्रभाष्यार्थमनवबुद्ध्य दूषणारोपणमत्यन्तमनुचितमित्यलमधिकेन ।

ननु सर्वविधकर्मग्रहणमेव कस्मान्न भवतीत्यत्राह **विद्यानुपयुक्तेति** । न रमत इति नरशब्दार्थो **विरक्तेनेत्युक्तः** । रीङ्क्षय इति धातुपरिग्रहे क्षयस्य जीवगतस्य ज्ञानसङ्कोचरूपस्वभावविकारात्मकत्वसम्भवेन नर इति तद्रहितवाचिना विवेकात्मकज्ञानविकासवत्त्वं सुवचमित्यभिप्रेत्य **विवेकिनेत्यु-**

**संभवः । संभावितानामपि केषांचित् 'नाविरतो दुश्चरितात्' इत्यादिबलात्स्वानुगुणा निष्कृतिस्स्यात् । तदधिगमाधिकरणे तु प्रामादिकानामेवाश्लेषः परविद्यावतामपि स्थापितः । ज्ञानाग्निदग्धाधिकारो विधिनिषेधानधिकारीति पक्षस्तु न वेदवित्संमतः ॥ २ ॥**

असुर्या नाम ते लोका अन्धेन तमसा वृताः ।
तांस्ते प्रेत्याभिगच्छन्ति येकेचात्महनो जनाः ॥ ३ ॥

**वक्ष्यमाणविद्यायां शीघ्रं प्रवृत्त्यर्थमुक्तप्रकारब्रह्मवेदनविधुरतया वित्तेषणायोगाच्चान्यथा भवद्भिर्ज्ञानानुष्ठानैरात्मघातिनां निरयपातोऽवश्यम्भावीत्याह असुर्या-जना इति । असुर्याः 'असुरस्य स्व'मिति यत् । आसुरप्रकृतीनामनुभाव्या इत्यर्थः । नामेति प्रसिद्धौ । ते नरकसंज्ञिता भीषणतमा लोकाः सन्ति । पुनस्तान् विशिनष्टि अन्धेन**

---

कम् । यद्यपि न विवेकिना क्रियेत , अथापि यदि कदाचित् क्रियेत तर्हि तदलेपस्य बोधनीयतया कर्मपदेन तद्ग्रहणमावश्यकमित्यत्राह **सम्भावितानामिति** । तर्हि तदधिगमाधिकरणविरोध इत्यत्राह **तदिति** । अन्यथा 'नाविरतो दुश्चरितात्' इत्यादिप्रमाणविरोध इति भावः । तथा च प्रथमव्याख्याने नियमेनानुष्ठेयानां विद्याङ्गकर्मणां ग्रहणम् । द्वितीयव्याख्याने च विद्योपयुक्तानां काम्यानां ग्रहणमित्युक्तं भवति । बुद्धिपूर्वपदेनाबुद्धिपूर्वग्रहणमपि दर्शितम् । अद्वैतिमतमस्यति **ज्ञानेति** ॥ २ ॥

ननु नित्यत्वादात्मनो हन्तिकर्मत्वासम्भवादात्मन इति कथम् ? तत्राह **आत्महन इति** । **असन्निति** । ब्रह्म वेदेत्येतदसच्चेत् स आत्माऽसन्नेव भवतीति श्रुत्यर्थः । 'ब्रह्मज्ञानाज्ञानाभ्यामात्मनः सद्भावासद्भावौ दर्शयती'त्यानंदमयाधिकरणभाष्यप्रामाण्यात् । यद्यपि 'सद्भावासद्भावज्ञानाशङ्के'ति तत्रैव भाषितत्वेन यथाश्रुतेऽप्यर्थे तात्पर्यमवसीयते; अथाप्यसच्छब्दस्य सद्भिन्नरूपार्थाङ्गीकारेण कोटिद्वयेनात्मविभागस्यैव युक्तत्वात् सतद्विरोध्युदासीन-

तमसा वृताः गाढेनान्धकारेण व्याप्ताः । तान् आलोकप्रसङ्गरहिता-न् । ते स्वात्मघातिनः । प्रेत्य तदातनदेहादुत्क्रम्य । अभिगच्छ-न्ति कात्स्न्येन निरन्तरं प्राप्नुवन्ति । ये के च देवजातीया मनुष्य-जातीया वा तथा ब्राह्मणक्षत्रियादयो वा आत्महनः 'असन्नेव स भव-ति असद्ब्रह्मेति वेद चेत्' इत्याम्नातामसत्कल्पतां स्वात्मानं नयन्तः । देहपातमुखेन (यद्वा देहघातमुखेन?) (देहघातमुखेन वा?) पातक-वर्गोपलक्षणमिदम् । जनाः जनिमन्तः संसरन्त इत्यर्थः ॥ ३ ॥

---

रूपेण त्रेधा विभागाविवक्षायामुदासीनानुक्त्या न्यूनताप्रसङ्गात् ब्रह्मसद्भावाज्ञा-निनामप्यात्मक्षेमाभावेन संसारित्वावश्यम्भावात् उत्तरभाष्यस्य यथाश्रुतप्रती-तानुसारेण्युपपत्तेश्च पूर्वभाष्यार्थमेवाऽऽद्रियन्ते । असन्नेवेत्येवकारेण कृतां आत्मनि यथाश्रुतासत्त्वाभावेन ब्रह्मैव भवतीत्यादाविव तुल्यत्वाविवक्षां दर्शय-ति असत्कल्पतामिति । स्वरूपविकाराभावेनासद्व्यपदेशायोगेऽपि स्वभाव-विकारमादाय तद्व्यपदेशो युज्यत इति न हन्तिप्रयोगायोग इति भावः । देहपातमुखेन पातकवर्गोपलक्षणमिदमिति पाठो दृश्यते । अस्यार्थः— ननु मन्त्रद्वयेन ब्रह्मवेदनस्य निषिद्धवर्जनस्य कर्मानुष्ठानस्य च प्रापणादुपरि च तेषां समुच्चयस्यापि वर्णनादस्य मन्त्रस्य तत्सामान्याभावप्रयुक्तानर्थवर्णन-परत्वं युक्तमित्याशयेन "अन्यथा भवद्भिर्ज्ञानानुष्ठानै"रित्यवतारितत्वात् आ-त्महन इति पदेन ब्रह्मज्ञानवैधुर्यमात्रोक्तौ न्यूनता प्रसज्येत, विहितवर्जन-निषिद्धसेवनरूपविपरीतानुष्ठानस्यानुक्तत्वात्, तत्राह देहेति । यद्यप्यात्म-शब्दस्य चेतने निरूढत्वात् देहविशिष्टवाचिपदाप्रयोगेणात्मस्वरूपमात्रग्रहणे स्वारस्यदर्शनाच्च हनधातोस्तदसत्त्वापादनरूपार्थस्यैव युक्तत्वात्तदपेक्षया बहि-रङ्गदेहवियोजनरूपार्थपरत्वं न वर्णितम्; अथाप्यात्मशब्दस्य स्ववाचित्वाङ्गी-कारात्तेन च समभिव्याहृतजनशब्दोक्तदेहिग्रहणात् चेतनवाचित्वेऽप्यावश्यक-त्वपर्यालोचनया वा देहवियोजनरूपार्थस्यापि ग्रहणसम्भवात् देहपातप्रयो-

अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्षत् ।
तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥

---

जकोद्धन्धनब्रह्महत्त्यादिपरत्वस्यापि निश्चयेन तन्मुखेन सुरापानादिपातकव-र्गोऽप्युपलक्षणीयः । एवञ्चानुष्ठानान्यथाभावस्याप्युक्तत्वात् न पूर्वापर-सन्दर्भानौचित्यमिति । अथवा आत्महननं हि नाम यथावस्थितात्मस्वरू-पापरिज्ञानम् । देहेन्द्रियादिविलक्षणत्वेन परमात्मनियाम्यत्वेन च तदप-रिज्ञानम् । एवं परमात्मदेहत्वेनास्वतन्त्रे जीवे स्वतन्त्रत्वभ्रमः प्रत्यगात्मदे-हादौ प्रत्यगात्मत्वभ्रमश्चोक्तौ भवतः । तथा च देहात्मभ्रमस्यापि शब्द-तो लाभात्तस्यैव ब्रह्महत्त्यादिपातकमूलभूतत्वाच्च तेषां पातकानामप्यर्थत उक्ति-र्भवति । अतो देहात्मभ्रमोक्तिमुखेन पातकवर्गस्यापि ज्ञापितत्वान्न न्यूनते-ति । एवं सूक्त्यर्थवर्णने क्लेशं परिशील्य पक्षान्तरपरत्वे स्वारस्यम् , देह-पातेत्यत्र स्वालित्यसम्भवं हनधात्वर्थानुवादौचित्यं च विमृश्यास्मदाचार्याः 'यद्वा देहघातमुखेन पातकवर्गोपलक्षणमिद' मिति समीचीनं पाठं साधु सं-म्भावयन्ति । 'अनन्दा नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्याभिगच्छन्ति अविद्वांसोऽबुधो जनाः' इति समानार्थकश्रुतिरपि पौनरु-क्त्यपरिहाराय अविद्वांस इति पदेन ब्रह्मवेदनाभावं अबुध इति विहितनि-षिद्धकरणाकरणौपयिकप्रकृतिविलक्षणात्मस्वरूपविवेकाभावं च वक्तीति, आ-त्महन इत्यस्य सर्वोपलक्षणत्वं युज्यत एवेति ध्येयम् ॥ ३ ॥

इतःपञ्च मन्त्राः ईशावास्यमिति पदद्वयार्थविवरणपराः । तत्र प्रथमे-नैश्वर्यं व्याप्तिश्च वर्ण्यते । तत्रैश्वर्यप्रतिपादन ऐदम्पर्यम् । द्वितीयेन वास्यमिति प्रकृत्यर्थो व्याप्तिस्सर्वविषयिणी । तृतीयेन तदुभयसिद्धः शरीरात्मभावः । चतुर्थेन तन्निबन्धनत्वं सामानाधिकरण्यस्य ज्ञाप्यते । पञ्चमेन प्रत्ययावग-तार्हत्वसूचितमखिलहेयप्रत्यनीकत्वादिकमिति विवेकः ।

सर्वावासत्वेन प्रस्तुतमीश्वरतत्त्वं विरुद्धवदभिलापव्यञ्जितेन विचित्रशक्तियोगेन विशदयति अनेजदेकं मनसो जवीय इति । अनेजत् अकम्पमानम् । एकं प्रधानभूतम्, स्वानधीनस्वसमानद्वितीयरहितं वा । मनसो जवीयः वेगवत्तरमनसोऽप्यतिशयितजवम् । नन्विदं न जाघटीति निष्कम्पत्वं वेगवत्तरत्वं चेति ; मैवम्, तात्पर्यवृत्त्या सुघटितत्वात् । सर्वस्य स्वेन नित्यव्याप्तत्वादनेजत् सर्वदा मनसो गोचरदेशमतिक्रम्य वृत्तेर्मनसो जवीय उपचर्यते । एवमुत्तरेष्वपि

---

एकमित्यस्य मुख्यपरत्वाभिप्रायेण प्रधानतममित्यर्थमुक्त्वा स्वसजातीयद्वितीयरहितमित्यर्थमभिप्रेत्य परिष्करोति **स्वानधीनस्वसमानद्वितीयरहितं वेति** । वस्तुत्वेन सर्वस्य, चेतनत्वेन जीवसामान्यस्य, भोगसाम्येन मुक्तादेः, नित्यनिर्दोषगन्धत्वेन नित्यस्य च स्वसमानत्वात् समानद्वितीयराहित्यं न भवतीति स्वानधीनत्वमुक्तम् । स्वानधीनस्सन् यः स्वसमानस्तादृशद्वितीयरहितमित्यर्थः । अनधीनत्वेन साजात्यं विवक्षितमिति भावः । स्वानधीनत्वसामानाधिकरण्यस्वप्रतियोगिकत्वोभयसम्बन्धावच्छिन्नभेदवृत्तित्वाभाववदिति यावत् । ईश्वरगतभेदवृत्तित्वमुक्तसम्बन्धद्वयेन तस्मादन्यत्र सर्वत्र प्रसिद्धम् । स्वपदेन सर्वस्येश्वरव्यतिरिक्तस्य परिग्रहः । **उपचर्यत इति** । यत्तु कश्चित्तिष्ठत एवाऽऽकारान्तरेण ग्राहग्रस्तगजेन्द्ररक्षणादौ मनसोऽप्यतिशयितवेगेन विप्रकृष्टदेशसम्बन्धयोग्यत्वं जवीयस्त्वमिति ; तदुपेक्ष्यम् । इह नपुंसकनिर्देशस्वारस्येनात्मतत्त्वस्यैव निरूप्यमाणतया तदीयविप्रकृष्टदेशसम्बन्धस्य वेगसाध्यत्वाभावात् । विग्रहसम्बद्धस्यैव वेगसाध्यत्वात् 'अपाणिपादो जवनो गृहीता' इति वचनस्यान्तर्याम्यधिकरणभाष्ये परमात्मविषये तत्तदिन्द्रियसाध्यकार्यस्येन्द्रियनिरपेक्षमेव सिद्धेर्निरूपणावसरे उपात्तत्वेन विग्रहसाध्यसम्बन्धपरत्वाभावस्य भाष्याभिप्रेतत्वावगमेन व्यासार्यैः 'जवनः झटिति दूरस्थसम्बन्धक्षमः अतो विभुत्वाविरोधः' इत्युक्तत्वेन च

वाक्येषु भाव्यम् । नैनद्देवा आप्नुवन् पूर्वमर्षत् प्रागेव सर्वान् प्राप्नुवत् देवा हिरण्यगर्भादयो नाप्नुवन् एतावन्तं कालं न लेभिरे । विभुत्वेन नित्यव्याप्तमपि कर्मप्रतिबद्धज्ञानाः क्लेशज्ञा विद्याधिगमात् पूर्वं स्वबुद्ध्या न प्राप्नुवन्तीति न विरोधः। यथोक्तं छान्दोग्ये 'तद्यथा हिरण्यनिधिमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुः, एवमेवेमाः सर्वाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति ; अनृतेन हि प्रत्यूढाः' इति । तद्धावतोऽन्यानत्येति तिष्ठत् 'यः पृथिव्यां तिष्ठन्' 'य आत्मनि तिष्ठन्' इत्यादिक्रमेण तत्सर्वत्र तिष्ठदेव धावतो गरुडा-

---

तत्तुल्यरूपस्यास्यापि वचनस्याचार्यपादभाषितार्थपरत्वस्यैव स्वीकार्यत्वात् । पूर्वं निष्कम्पस्य पश्चाज्जवीयस्त्वाभ्युपगमेऽनेजत्त्वावस्थायामेव जवीयस्त्वस्य श्रुतौ शत्राऽवगतस्य बाधप्रसङ्गात् । तस्यामेवावस्थायामाकारान्तरेण तदुपपादने चैकमिति पदप्रयोगस्य व्यर्थतापत्तेः । एकपदं हि कथमपि व्यक्त्यनेकत्वकल्पनया विरोधपरिहारस्यानभिमतत्वमपि ज्ञापयति । ईदृशजवीयस्त्वस्य नित्यमुक्तादिष्वपि वर्णयितुं शक्यत्वेन परमात्मनः सकलेतरव्यावृत्तत्वालाभाच्च । अत एवंरूप उपचार आवश्यक एवेति । प्रागेवेति । परमात्मतत्त्वं प्रागेव देवानाप्नोति । ते तु तत्तदानीमपि नाप्नुवन्तीति वैचित्री । आप्नुवन्निति भूतकालस्य अर्षदिति वर्तमानकालस्य च निर्देशात् परमात्मकर्तृकप्राप्तिः पश्चात्तनीति भ्रमव्युदासाय पूर्वमिति । देवकर्तृकाप्राप्तिसमकालमेव परमात्मनः प्राप्तिलाभायार्षदिति शतुर्निर्देशः । विरोधपरिहारे तु अर्षदिति वर्तमाननिर्देशान्नित्यप्राप्तिलाभः । पूर्वमिति विद्याधिगमात् पूर्वमित्यर्थ इत्यपि योज्यम् । यत्तु अर्षदित्यस्य प्राप्नुवदित्यर्थं विहाय चरदित्यर्थं विवक्षित्वा देवा इत्यस्य स्वयं धावन्त इति शेषपूरणेन व्याख्यानम् ; तत्र शेषपूरणस्यायुक्तत्वात् पश्चाद्गच्छता पूर्वं गच्छतोऽप्राप्तेः सहजत्वेनातिशयव्यञ्जनायावश्यवक्तव्यस्य देवकर्तृकधावनस्य कथञ्चिद्गम्यमानत्वकल्पनानुपपत्तेः , उत्तरवाक्ये तिष्ठतो

देनेष्यत्येति यावद्यावद्धावन्ति जविनस्तावतः परस्तादपि वर्तत इ-त्यर्थः । यथोच्यते 'वर्षायुतशतेनापि पक्षिराडिव संपतन् । नैवा-न्तं कारणस्येयाद्यद्यपि स्यान्मनोजवः' इति । अन्येषां क्वचित्तिष्ठतां धावदतिक्रमणं नास्तीति वैचित्री । अन्यदपि किञ्चिदाश्चर्यमित्याह तस्मिन्नपो मातरिश्वा दधातीति । तस्मिन्नवस्थितः अप्प्रतिबन्धानुगु-णकाठिन्यादिरहितोऽपि वायुरपो बिभर्ति । सर्वाधारभूतेन सर्वेश्वरेण

---

ऽपि धावदतिक्रमवर्णनादेव गच्छतस्तदप्राप्तेः कैमुत्यसिद्धत्वात् , नाप्नुवन्ति-त्युक्त्या तद्विरोध्याप्तेरेव गत्यर्थकऋषिधातुवाच्यत्वस्य युक्तत्वात् , उपस्थि-तत्वेन देवानामेव वा , कर्मविशेषानिर्देशेनाविशेषात्सर्वस्य वा प्राप्तिकर्मत्व-सौलभ्याच्च नादर्तव्यम् । एवं तृतीयपादस्य देवकर्तृकधावनानन्तरं चिरं तिष्ठदपि प्रागेव धावतो देवानत्येतीत्यर्थवर्णनमपि चिरमित्यादिपदाध्याहार-प्रसङ्गात् तिष्ठत्त्वावस्थायामेव धावदतिक्रमस्य श्रुत्याऽवगम्यमानस्य बाधप्रस-ङ्गादिपूर्वोक्तदोषाच्चायुक्तमेव । अप्प्रतिबन्धेति । अपां प्रतिबन्धेत्यर्थः । इदं च काठिन्यादिराहित्यं मातरिश्वेति पदलब्धम् । मातरि निरालम्बे व्योम्नि श्वयति गच्छतीति तदर्थात् । न हि काठिन्यगौरवसद्भावे तत्र ग-मनमुपपद्यत इति । यत्त्विह अप इति ब्रह्माण्डाधार-तदावरण-कारणजल-ग्रहणम् ; तदपि न युज्यते । आवरणजलस्य तदावरणाग्न्यावरणेन वायुना ध्रियमाणत्वे प्रमाणाभावात् । यथा हि जलजन्यत्वेऽपि पृथिव्याः न जले-नान्तः प्रविश्य धार्यमाणत्वम् , तथैव हि वायुना जलस्यापीति । न च वायुः समनन्तरावरणभूतः येनानन्तःप्रवेशेऽपि धारकत्वं स्यात् । अग्नि-रेव ह्यनन्तरः । साक्षाद्धारकाग्रहणेन परम्परया धारकस्य ग्रहणं चानुपप-न्नम् । एकतो ब्रह्माण्डप्रतिबद्धस्यान्यतोऽग्निपरीतस्य चावरणजलस्य किम-र्थो धारकान्तरापेक्षा । अथ कथमपि ब्रह्माण्डान्तर्गतस्य जलस्य वायुधार्य-त्वदर्शनेन युक्त्या कल्प्येत , तर्ह्यपेक्षित-सन्निहित-दृश्यमानबाष्पपयोधरादि-

विधृतः स मातरिश्वा तच्छक्त्यैव पाथःपयोधरनक्षत्रग्रहतारकादिकं बिभर्तीत्युक्तं भवति। स्मर्यते हि 'द्यौः सचन्द्रार्कनक्षत्रं खं दिशो भूर्महोदधिः। वासुदेवस्य वीर्येण विधृतानि महात्मनः।' इति ॥ ४ ॥

---

तदेजति तद्‌ु नैजति तद्दूरे तद्वन्तिके ।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥ ५ ॥

अनेजदेकं मनसो जवीय इत्युक्तमर्थमादरान्मुखान्तरेणानुशास्ति तदेजति तद्‌ु नैजतीति । तत् व्याप्तं तत्त्वं पूर्वोक्तप्रकारेण जवीयस्त्वादिना एजति कम्पते कम्पत इवेत्यर्थः । तदु नैजति तदेव वस्तुवृत्त्या न कम्पते । तद्दूरे तद्वन्तिके तद्दूरेऽन्तिके च वर्तते । मूढप्रतिबुद्धपुरुषभेदापेक्षया विभोरेव दूरान्तिकवर्तित्वव्यपदेशः । यथाऽऽह शौनकः , 'पराङ्मुखानां गोविन्दे विषयासक्तचेतसाम् । तेषां तत्परमं ब्रह्म दूराद्दूरतरे स्थितम् ॥ तन्मयत्वेन गोविन्दे ये नरा न्यस्तचेतसः । विषयत्यागिनस्तेषां विज्ञेयं च तदन्तिके' इति । केचित् पदार्थाः कस्यचिदन्तर्भवन्ति, न बहिः । केचित् बहिर्भवन्ति , नान्तः । तदुभयव्यावृत्तिमाह तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यत इति । तत् सर्वव्याप्तमुक्तं परं ब्रह्म अस्य विचित्रचि-

---

पयोग्रहणमेव युक्तम् । अविशेषात्तु प्रामाणिकत्वे तस्यापि ग्रहणं स्वयमेव सिद्ध्यतीति । एवं सकलजलग्रहणे च वायुधार्यत्वाविशेषादन्योपलक्षणत्वमपि युक्तमेवेत्याशयेनाह पाथःपयोधर नक्षत्रेति ॥ ४ ॥

एजनं कम्पनम् । तच्च चलनं वाऽनेकदिगवच्छेदेन वस्तुन आवृत्तसंयोगो वा । न च तत् सर्वत्रनित्यसंयुक्ते परमात्मनि संभवति, अत आह कम्पत इवेति । कम्पनस्थल इव संबन्धमात्रसद्भावेन तथा प्रयोग इति भावः । न च विग्रहविशिष्टवेषेण तदुपपत्तिरिति वाच्यम् । तथापि विग्रह एव तद्विश्रान्तेरात्मस्वरूपे तदभावात् । केवलात्मस्वरूपस्यैव प्रतिपादनप्रकरणात् , पूर्वमन्त्रोक्तदिशोपचारस्यैव युक्तत्वात् , तद्दूरे तदन्तिक इत्यत्र

**दचिद्रूपेण प्रमाणसिद्धस्य सर्वस्य वस्तुनः । अन्तर्भवति अप्रतिघातादविभक्तदेशं वर्तत इत्यर्थः । तदेव सर्वस्यास्य बहिरपि भवति परिमितानां पदार्थानां भावदेश इवाभावदेशेऽपि वर्तत इति यावत् । तदेतद्व्यक्तमुक्तं तैत्तिरीये सर्वपरविद्योपास्यविशेषनिर्धारणार्थे 'सहस्रशीर्ष' मित्यनुवाके, 'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणःस्थितः' इति ॥**

---

दुर्ग्रहत्वसुग्रहत्वरूपौपचारिकार्थस्य संप्रतिपन्नत्वेनाविशेषाच्च । अविभक्तदेशमिति । तथा च वस्तु यद्देशेऽस्ति तद्देशावच्छिन्नतत्संबन्धित्वमेव वस्त्वन्तर्वर्तित्वमित्यर्थः । अत्र यदाचार्यपादनिष्कृष्टमन्तर्व्याप्तिप्रकारं बहिर्व्याप्तेः परिमितद्रव्यमात्रविषयकत्वं च विषयीकृत्य विशेषतो दूषणं अन्यादृशार्थस्थापनं च, तत्सर्वं सत्तर्कप्रमाणसंप्रदायव्युत्पादनेन सम्यगत्र प्रतिक्षिपामः ।

यत्तावददादौ अन्तःपदस्याणुद्रव्यविषयेऽविभक्तदेशकत्वरूपोऽर्थः अन्यत्र तु यथाश्रुत एवेत्यर्थद्वयपरत्वकल्पनं न संभवति । अत्र सर्वस्येत्येकस्यैव पदस्याणुतदितरसर्वद्रव्योपस्थापकत्वात्तावदन्वय्येकरूपार्थस्यैव वक्तव्यत्वादित्युक्तम् , नायमाचार्याणामुपालम्भः, तैरविभक्तदेशकत्वरूपैकविधार्थस्यैव भाषितत्वात् । अन्यः पुनरर्थो यद्यपि न प्रकृतश्रुत्यर्थः अथापि सद्भावमात्रेण क्वचित्क्वचिदुच्येतेति किमत्र हीयत इति । एतेनाणुविषये विवक्षितस्यैवार्थस्य तदितरसाधारणत्वेन तेष्वर्थान्तरवर्णनमनावश्यकमित्यनन्तरोक्तमप्यनवकाशम् । अर्थद्वयस्याभाषितत्वात् ।

यत्पुनरविभक्तदेशतया वर्तमानत्वमनवच्छिन्नवृत्तिमत्त्वपर्यवसन्नं तत्तद्वस्तुसंबन्धिसर्वप्रदेशसम्बन्धित्वमेवेति तावतः 'तदन्तरस्य सर्वस्ये'त्यनेनैवलाभे 'तदु सर्वस्य बाह्यत' इति व्यर्थम् । वाक्यद्वयकार्यस्य सर्वप्रदेशसम्बन्धित्वावगमस्यैकेनैव सिद्धत्वादिति ; तन्न । स्फटिकान्तर्भास्करस्य प्रभा प्रसरतीत्यादौ स्फटिकस्य यावद्देशसम्बन्धस्तावद्देशावच्छेदेन प्रभाप्रसर इत्यस्यानवगम्यमानत्वात्, स्फटिकसम्बन्धिकिञ्चिद्देशावच्छेदेन प्रभासम्बन्धेऽपि तथा

व्यवहारात् सर्वप्रदेशसम्बन्धित्वलाभस्यान्तःपदमात्रेणासिद्धेः । अथ भावदेशे कश्चित्सम्बन्धेनाप्यन्तःपदोपपत्तावपि बहिःपदस्याभावदेशपरत्वेन भावदेशे सर्वत्र तत्सत्तारूपाभीष्टार्थसिद्धयेऽन्तःपदस्य तावत्तात्पर्यं कल्पनीयमिति सर्वप्रदेशसम्बन्धित्वलाभ इति चेत् तर्हि भावदेशातिरिक्तेऽभावदेशेऽपि सद्भावबोधकबहिःपदबलादेव, 'बहिरपि विद्यमानस्य कथमन्तःसर्वत्राविद्यमानत्व'मिति युक्त्या कथमपि सर्वप्रदेशसम्बन्धित्वं कल्पनीयमितीदृशार्थज्ञापकत्वादेव न तद्वाक्यवैयर्थ्यम् । वस्तुतो भावदेशे सर्वत्र वृत्तेरन्तःपदेन लाभेऽप्यभावदेशवृत्तित्वस्यालाभात्तदर्थतैव बहिःपदस्य स्वीकृताऽस्माभिः । न तु तत्तत्पदार्थबहिरवयवपरतेति न वैयर्थ्यप्रसङ्गः इति नूनं स्वपक्षवासनया परपक्षविस्मरणेन च संपतितमिदं दूषणम् । न च सर्वस्येति सर्वपदार्थग्रहणात् सर्वपदार्थभावदेशवृत्तित्वस्यान्तःपदेनावगतावेकैकवस्तुभावदेशे तदभावदेशे च वृत्तेर्विदितत्वान्न तद्वाक्यमावश्यकमिति वाच्यम् ; भवन्मतेऽपि वैयर्थ्यध्रौव्यात् । 'अन्तरस्य सर्वस्ये'त्यनेन हि सर्वपदार्थीयान्तरवयवसम्बन्धोऽवगतः । न हि घटस्यान्तर्विद्यमानः पदार्थ एकतदुपरिभागेन सम्बन्धमलब्ध्वैवान्येन कुड्यादिना सम्बन्धुमलम् । अत एकपदार्थान्तस्संबन्धि वस्तु तं परितः स्थितेषु पदार्थेष्वन्तःसम्बन्धलाभाय तस्य बहिरपि सर्वत्र संबन्धं लभत इति युक्त्यैव सिद्ध उत्तरवाक्यार्थ इति । न च जगत्सीमान्तभागे विद्यमानस्यार्थस्यानन्तरं कस्यचिदभावेन तदीयसर्वबहिरवयवसंबन्धः कथं लभ्येतेति शङ्क्यम् । प्रकृतेरधः परिच्छेदस्य नित्यविभूतेरूर्ध्वपरिच्छेदस्य चानङ्गीकारेण सीमान्तभागस्यैवाभावेन सर्वस्यापि प्राकृतस्याप्राकृतस्य वा पदार्थस्य समनन्तरपदार्थान्तरवैशिष्ट्यनियमात् । अन्यथा तादृशपदार्थीयावयवस्य कस्यापि बहिश्शब्दवाच्यत्वासंभवस्य वक्ष्यमाणत्वेन तथा सार्थक्यवर्णनासंभवाच्च । अथ युक्त्या सिद्ध्यतोऽपि साध्यप्रति-

पत्त्यर्थमुक्तिर्युज्यत इति चेत्तुल्यम् । अन्तःपदेन सर्वान्तरवयवग्रहणस्य वहिःपदं गमकमिति तत्सार्थक्यमिति चेत् तदपि तुल्यमेव । आचार्यपादाभिमतयोजनास्वीकारे तु परमात्मापेक्षया सर्वस्य न्यूनपरिमाणकत्वमपि स्पष्टीक्रियते, न भवन्मत इति विशेषः । अन्यच्च बहु वक्ष्यते ।

**यदपि** कतिपयद्रव्येष्वन्तर्व्याप्तेः कतिपयद्रव्येषु बहिर्व्याप्तेश्चासंभवं मत्वा तर्कबलेन स्वरसावगतसर्वद्रव्यान्तर्बहिर्व्याप्तिपरित्यजनमयुक्तमेव । न हि वचनविरोधे न्यायःप्रभवतीति न्यायादिति ; तदपि भवदभिमतान्तर्व्याप्तेरसद्रीत्या क्वचिदसंभवेप्यस्मदभिमतायास्तस्यास्साधारण्येन तद्विषये संकोचाभावात्, वचनयोर्विरोधे प्रबलवचनानुरोधेन दुर्बलवचनस्यान्यथैव नेयत्वस्योत्सर्गापवादादिस्थलेषु संप्रतिपन्नत्वेन वक्ष्यमाणतथाविधश्रुत्याश्रितन्यायस्य प्रबलत्वाच्च पराहतम् । अत एव, अन्तर्बहिश्च तत्सर्वमिति वचनमपि न साधकम् । तदपि विवरिष्यते ।

**यदपि** 'य आत्मनि तिष्ठन्नात्मनोन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृत' इति श्रुतिरन्तर्व्याप्तौ प्रमाणम्; आत्मनोन्तर इति विस्पष्टमुक्तत्वात् । आत्मनि [illegible] यनेनैव बहिस्स्थितेरुक्तत्वेन तदर्थत्वकल्पनाऽसंभवात् । [illegible] भावस्योक्तत्वेनान्तःप्रवेशानङ्गीकारे तदसंभवप्रसङ्गात् । न हि राज्ञो राष्ट्रं शरीरमिति ; तदपि न; अस्मदभिमतान्तवर्तित्वस्यैव सुवचत्वात्, शरीरात्मभावस्य पौनरुक्त्यपरिहारस्य च तत एव सिद्धेः । यत्तु राज्ञो राष्ट्रं शरीरं स्यादिति, तद्भवत्पक्ष एव । राष्ट्रान्तरेव राज्ञस्सद्भावात् । न खलु स राष्ट्राद्बहिर्भूय किमप्यरण्यमन्यराज्यं वा प्रविष्टः । अस्माकं पुना राष्ट्रस्य यावद्देशावच्छेदेन सद्भावस्तावद्देशावच्छेदेन राज्ञस्संबन्धाभावान्मूर्तद्रव्यत्वेनैकप्रदेशावच्छेदेनापि संबन्धायोगाच्च नैतदापादनमवसरं लभते ।

यदपि व्यासार्यवचनद्वयमुपात्तम्— 'आत्मनि तिष्ठन्नित्युक्ते वेद्यामग्निस्तिष्ठति, तिले तैलं तिष्ठतीति वद्बहिरबहिस्स्थितिसाधारण्यात् तद्वैशद्यार्थमाह आत्मनोऽन्तर इती'ति, 'अन्तःप्रविष्टश्शास्तेत्येतत् सर्वात्मशब्दव्याख्यानरूप'मिति च; तदप्यसाधकम्, विपरीतसाधकं च । अस्मदिष्टार्थस्यैव तत्र वर्णितत्वात् । अर्थश्चैवम्—भूतले घटस्तिष्ठति, वेद्यामग्निः, वृक्षाग्रे श्येन इत्यादौ तत्तदधिकरणं यत्प्रदेशावच्छेदेनास्ति तद्देशावच्छेदेनासंबध्य तस्मात्परत एव स्थितमाधेयमवगम्यते । तिले तैलं तिष्ठतीत्यत्र तु यद्देशावच्छेदेन तिलस्य सद्भावः, तद्देशावच्छेदेनैव सौक्ष्म्यविशेषेण तैलं तिलसम्बन्धमनुभवतीति, तिले बाह्याभ्यन्तरसर्वावयवावच्छेदेन तैलसद्भावात् । तत्रात्मनि परमात्मसंबन्धः किं आत्मनः परस्तादेव स्थितस्य केवलमात्मना संबन्धरूपः, उतात्माऽणुरपि यद्देशावच्छेदेनास्ति तद्देशावच्छेदेनैवाप्रतिहन्यमानतया संबन्धरूप इति विचिकित्सा आत्मनि तिष्ठन्नित्येतावता न शाम्यति । अविशेषादुभयविधस्थित्यङ्गीकारसंभवेऽपि विशदमनवगम्यमानत्वात् । अत आत्मनोऽन्तर इत्यनेन वद्वैशद्यं क्रियत इति । यदि पुनरात्मनामन्तरवयवसद्भावं व्यासार्या अभ्यमंस्यन्त तर्हि बहिरबहिरित्यनुक्त्वाऽन्यथैवावर्णयिष्यन् । अत आत्मनि तिष्ठन्नित्येषु पेक्ष्यन्तर इति भावाभावदेशपरमित्येव प्रथमवचनतात्पर्यम् । एतेन द्वितीयमपि वचनं निर्व्यूढम् । अत्र जनानामित्यनेन न तावत्केवलदेहग्रहणं संभवति, तस्य तत्राप्रसिद्धत्वात् । अतो देहभृतामेव ग्रहणम् । तत्र किमन्तःशब्देन तदीयदेहान्तरवयवभूतहृद्रूपदेशो गृह्यते किं वाऽऽत्मनामेव कश्चिदन्तरवयवः । आद्ये, न काचिदस्माकं क्षतिः । अन्त्ये तु सूक्तिविरोधः । व्यासार्यैरेव हि 'अन्तःप्रविश्य नियाम्यत्वं हि शरीरत्वं, अन्तःप्रवेशव्याप्तिभ्यां नृपगगनव्यावृत्ति' रित्युक्तम् । यदि पुनरन्तःप्रवेशं भवदभिमतमभिसमधास्यन्त, न तर्हि नियाम्यत्वदलस्य गगनव्यावृत्त्यर्थता-

मभ्यधास्यन्त ; गगने ताद्दशान्तःप्रवेशाभावेनातिव्याप्तेरेवाप्रसक्तेः । न हि प्रकृतितोऽपि सूक्ष्मस्यात्मनोन्तरवयवे प्रकृतित एव स्थूलस्य गगनस्य संबन्धः शक्यवर्णनः । एवमन्तःप्रवेशेन नृपव्यावृत्तिकथनमपि भवदुक्तान्तःप्रवेशस्य विवक्षितत्वे, न युज्यते । राज्ञो राष्ट्रान्तरेव विद्यमानत्वेन पुनरप्यतिव्याप्तितादवस्थ्यात् । अस्माकं तु तदवच्छिन्नदेशसंबन्धित्वस्यान्तःप्रवेशपदार्थत्वान्न दोष इति ।

यदपि यच्चकिञ्चिदिति श्रुतिप्रतिपन्नान्तर्बहिर्व्याप्त्युपपादनाय प्रवृत्तया 'अणोरणीयान्महतो महीयानि'ति श्रुत्याऽणुष्वप्यन्तर्व्याप्तिर्विभुष्वपि बाहिर्व्याप्तिश्च प्रयोजकाकारकथनात्तद्रष्टव्यमिति; तदपि न ; अस्याःश्रुतेर्यच्चकिञ्चिदिति श्रुत्यर्थनिरूपणैदम्पर्यादर्शनात् । अणोरिति श्रुतिर्हि तैत्तिरीये दशमेऽनुवाके कठोपनिषदि च श्रूयते । यच्चेति श्रुतिश्च तैत्तिरीय एकादशेऽनुवाके । तत्कथं यच्चेति श्रुत्यर्थप्रतिपादनायास्याः प्रवृत्तिरिति । भवद्वाक्यं हि स्वरसतो यच्चेति श्रुतिसमनन्तरश्रूयमाणतामणोरित्यस्या दर्शयति । नैवमस्तीत्युक्तम् । अथ व्याप्तिर्यच्च किञ्चेत्युच्यते,व्याप्तिप्रयोजक आकारश्चात्रोच्यत इत्येतावदेव विवक्षितमिति तत्रापि ब्रूमः । अत्राणीयश्शब्दो नाणुतरपरिमाणपरः, परस्य महत्त्वपरिमाणवत्ताया अणुत्वव्यपदेशस्यौपाधिकतायाश्च बहुसूत्रसिद्धत्वात् । अतस्सूक्ष्मतरपरः । अत एव तद्गतसौक्ष्म्यातिशयावधिसमर्पकमणोरित्यपि सूक्ष्मपरम् । तत्र च सौक्ष्म्यं यद्यन्तर्वर्तित्वरूपम्, तर्ह्यन्तरवयववत्तया मानान्तरासिद्धं जीवातिरिक्तमेव वस्त्वणुपदं ग्रहीष्यति । वस्तुतस्तु नान्तर्वर्तित्वरूपं सूक्ष्मत्वम् ; तत्रैव तस्य रूढत्वे प्रमाणाभावात् , येनाणीयश्शब्दस्याप्यतिशयितान्तर्वर्तित्वविशिष्टपरतयाऽणोरन्तःप्रदेशस्सिद्ध्येत् । अन्यथापि सौक्ष्म्यशब्दार्थवर्णनसंभवात् किञ्चैवं भवन्मते परमात्मापेक्षयाऽपि सर्वस्य जगतोऽणीयस्त्वप्रसंगः; परमात्मनो जगदन्त-

र्वर्तित्वस्यैव तस्यापि तदन्तर्वर्तित्वस्याभ्युपगतत्वात् । 'परमात्मान्तरन्येषां तदायत्तत्तयैव स्थितिश्च श्रुत्यादिप्रमाणबलेनैव दुरपह्नवे' ति खल्वभिहितम् । अतो दुर्ग्रहत्वरूपं सौक्ष्म्यं विवक्षितम् । तच्च तस्य तस्य परमात्मसंकल्पायत्तम् । न तु स्थौल्याभावादि तत्र प्रयोजकम् । स्थूलस्यापि भगवद्दिव्यविग्रहादेरग्रहणात् । सूक्ष्मस्यापि त्रसरेण्वादेर्ग्रहणात् । आनुभविकं चेदं, यत् बाह्यविषयप्रवणमिन्द्रियं नाचेतनं विहाय झटिति चेतनं गोचरयति, नतरां च तमतिक्रम्य तस्यापि नियन्तारं परं पुमांसमिति । अत एवाचेतनचेतनपरमपुरुषोपासनेषु क्रमेण दौष्कर्ये तारतम्यमवगम्यते । अतो दुर्ग्रहाद्दुर्ग्रहतर इति तदर्थः । यद्वा सूक्ष्मत्वमप्रतिहन्यमानत्वम् । सलिलादौ तरणिकिरणादेरप्रतिहन्यमानतया तस्य ततस्सूक्ष्मत्वम् । सलिलस्य किरणादौ प्रतिहन्यमानत्वाच्च स्थूलत्वम् । ननु भवन्मत आत्मनामन्तरवयवस्य कस्यचिदभावाज्जीवात्मनि परमात्मनः कात्स्न्र्येन संबन्धवत्तस्य तथा सम्बन्धार्हत्वमस्तीति कथं जीवात्स सूक्ष्मतर इति चेत् सत्यम् । एष तावद्दोषोऽन्तरवयवमङ्गीकुर्वतो निखिलस्य परमात्मान्तस्सद्भावं वदतो भवतोऽपि समस्तीति प्रागेवोक्तम् । अत उभाभ्यामेवं परिहारो वाच्यः । यथा नित्यानामीश्वरस्य चाविशिष्टेऽपि सार्वज्ञ्यादावनुपाधिकत्वमात्रेणेश्वरीये कश्चिदतिशयः, तत्सङ्कल्पोपाधिकतया च नित्यगते तत्र निकर्ष इष्यते, यथा च 'नान्योतोस्ति द्रष्टे'ति श्रुतिर्द्रष्ट्रन्तरे नित्यादौ विद्यमानेऽपि नियन्तृत्वविशिष्टद्रष्ट्रन्तराभावमात्रेण प्रवर्तत इत्यङ्गीक्रियते, तथैवाप्रतिहन्यमानत्वस्याऽऽत्मपरमात्मसाधारण्येप्यनुपाधिकत्वरूपस्य नियन्तृत्ववैशिष्ट्यरूपस्य चातिशयस्य परमात्मसौक्ष्म्ये, परेच्छायत्तत्वरूपस्य नियाम्यतया तन्नियन्तृत्ववैशिष्ट्याभावरूपस्य च निकर्षस्यान्यसौक्ष्म्ये च विद्यमानतयाऽणोरणीयानिति श्रुतिप्रवृत्तिरिति शक्यमेपितुमिति । अतोऽन्यथा सिद्धतया

नेदं न्यायसिद्धस्याप्यन्तरवयवराहित्यस्य बाधकम् , किमुत प्रमाणसिद्धस्य । एतेन महतो महीयानित्यपि निर्व्यूढम् । अणोरणीयानित्यणुपरिमाणं मात्रा- हीत्यनन्तरवचनप्रवृत्तिः, यतो महदस्य परिमाणमतो नाणुपरिमाणं ग्राह्य- मिति श्रुतिहृदयम् । अथवौपाधिकमणुपरिमाणमुपासनदशायामस्य 'अणी- यान्व्रीहेर्वा यवाद्वे'त्यादौ संप्रतिपन्नम् , तदाहाणोरणीयानिति । व्योम- वदेवायं व्यपदेश्य इत्याह महतो महीयानिति । पदस्वारस्यं पुनरल्पतर- परिमाणतामेव ग्राहयति । सा तु विरोधात् सर्वैरप्यनङ्गीकृतेति कथञ्चि- न्निर्वाहस्य कर्तव्यत्वे मानान्तराविरोधेन निर्वाह एवोचित इति नेयं श्रुतिर- न्यादशीमन्तर्व्याप्तिं साधयिष्यति ।

यदप्यणुषु कथमन्तर्व्याप्तिः,अन्तर्व्याप्तिप्रयोजकविवराभावादित्याशंक्य यथा दर्पणायःपिण्डादिष्वालोकानलप्रवेशप्रयोजकविवरसद्भावः प्रत्यक्षप्रतिप- न्नः , तथा परमात्मप्रवेशस्य प्रमाणसिद्धतया तत्प्रवेशप्रयोजकविवरसद्भावोऽ प्यणुषु प्रतिपन्न एवेति समाधानम् , तन्न भवति , विवरस्वरूपस्य दुर्निरू- पत्वात् । न तावद्दर्पणादिष्विवाकाशात्मकमेव विवरं भवितुमर्हति, अचेत- नापेक्षया चेतनस्य सूक्ष्मत्वेन तस्य तदन्तःप्रवेशासम्भवात् । न चाभाव एव विवरमिति युक्तम् अभावस्याधिकरणसापेक्षत्वस्य भावातिरिक्ताभावाभा- वेनाधिकरणादिरूपत्वस्य वा स्वीकार्यत्वेन तस्य तत्त्वायोगात् । न च पर- मात्मप्रदेश एव विवरम् , तत्प्रवेशप्रयोजकविवरस्यैवेदानीं चिन्त्यमानत्वात् । अतो विवरासम्भवादपि नान्तर्व्याप्तिः । वस्तुतो विवरमन्तरैव वस्तुष्वप्र- तिहन्यमानतयैव व्याप्तिस्वीकारस्य सलिलादौ श्रुतप्रकाशिकायां प्रदर्शितत्वे- न वृथैवायं भवतो विवरविचार इत्यलमत्र ।

यदप्यन्तर्व्याप्त्यभावात्प्रत्यगात्मनां परमात्मव्याप्तिप्रतिघातकत्वस्वी- कारे विभौ परमात्मनि तिष्ठद्भिः सञ्चरद्भिश्च प्रत्यगात्मभिश्छिद्रकरणमावश्य-

कमिति परमात्मस्वरूपस्य छेदभेदादिप्रसङ्ग इत्यवधीयतामिति ; तत्रापि सूक्ष्ममवधातव्यम् । तेन हि वस्तुना तत्र वस्तुनि छिद्रमाधातव्यम् , यस्मिन् वस्तुनि काठिन्यादिना कतिपयावयवावच्छेदेन यस्य वस्तुनस्सम्बन्धो न भवति । न च प्रत्यगात्मनः कश्चिदन्तरवयवं स्वीकृत्य प्रतिहन्यमानतया तत्र व्याप्त्यभावं परमात्मनो ब्रूमः, येनैवमुपालभ्येमहि । यावन्तः पुनरवयवाः स्वाभाविका औपाधिका वा प्रत्यगात्मनस्तावत्सु सार्वकालिकं परमात्मसम्बन्धं स्वीकुर्मः । अन्तरवयव एव न कश्चिदपीत्येवाऽभिदध्मह इति । सुसूक्ष्मावधाने च भवन्मत एव व्याकृताव्याकृतवियदादेः प्रत्यगात्मभिः स्थितिसञ्चरणसमयेषु छिद्रकरणमापद्यते , आत्मीयान्तरवयवे ततोऽपि स्थूलस्य तस्य सम्बन्धासम्भवात् । अत एवमन्तरवयवाङ्गीकारस्य बाधकमेव सांप्रतमापतितमिति ।

यदपि निरवयवत्वेन हेतुनाऽन्तःप्रवेशप्रतिघाताङ्गीकारे परमात्मनि कथमखिलस्यान्तरवस्थानसम्भव इति ; तदपि निरवयवत्वेन हेतुनाऽन्तरवयवस्यैवानङ्गीकारेण प्रतिघातप्रसक्त्यभावात् वियदन्तश्चरति विहङ्गम इत्यादौ परमत इवौपाधिकान्तःप्रवेशाङ्गीकारस्य निरवयवत्वविरुद्धत्वाभावात् तत्र सम्बन्धस्यैवेष्टत्वेन प्रतिघाताभावात् 'निरवयवत्वहेतुना प्रत्यगात्मनां स्वान्तःप्रवेशप्रतिघातकत्वे' इति लेखनस्य 'वन्ध्यात्वात् स्त्रियः स्वापत्यविवाहप्रतिरोधकत्व'मिति लेखनवदनन्वितार्थकत्वाच्चापास्तमेव । यदपि प्रत्यगात्मपरमात्मनोः परस्परान्तःप्रवेशे मणिदीपादिप्रभाणां स्वाम्रास्वाम्रपदार्थानां च परस्परान्तःप्रवेशस्य दृष्टान्तत्वकथनम् ; तद्दृष्टान्ते सावयवत्वेनौचित्यात् प्रमाणबलाच्च तथाङ्गीकारेऽपि दार्ष्टान्तिके वक्ष्यमाणरीत्या निरवयवत्वेनानौचित्यात् प्रमाणबलाभावाच्चोपेक्षणीयम् । यत्तु कालदिगात्मनां नैयायिकमते परस्पराप्रतिघातेन सर्वत्र व्याप्तिवदिहापीति ; तत्सत्यं तथैव । तन्मतवदेव निरव-

यवत्वं स्वाभाविकावयवराहित्यरूपं स्वीक्रियते; सम्भावितौपाधिकाकारे सर्वत्र व्यापनशीलता चेत्यस्माकमेवायं दृष्टान्तः ।

यत्पुनरत्यल्पपरिमाणे वटपल्लवशायिनि भगवति निखिलजगदण्डमण्डलस्यान्तःस्थितिश्च प्रमाणसिद्धेति दृष्टान्तान्तरवर्णनम् ; तत्रेदं विमष्टव्यम् ।

उदरस्य सावयवत्वेन निरवयवत्वान्तरवयवराहित्यादेरप्रसक्त्या न तमंशमादायायं दृष्टान्तः । अतोऽल्पपरिमाणे उदरान्तराले महापरिमाणजगत्स्थितिवन्निरवयवे प्रत्यगात्मनि परमात्मनोऽन्तःस्थितिरित्येव विवक्षितम् । तत्राल्पे महतः स्थितिरेव कथं निर्वाह्यत इति पृच्छ्यते । अघटितघटनाशक्त्यैवेति चेत् कस्तर्हि भवतो भावः ; किमल्पस्याप्युदरान्तरालस्य प्रमाणसिद्धमहत्स्थितिबलेनाल्पत्वविरुद्धमपि महत्त्वं स्वीकर्तव्यमिति, किं वा महदन्तरालस्यैव महदाधारकत्वमिति व्याप्तिं प्रकृते भंक्त्वाऽल्पान्तरालस्यापि महदाधारकत्वमूरीकर्तव्यमिति ? नाद्यः, अल्पत्वमहत्त्वयोः परस्पराभावरूपत्वाद्भावाभावयोरसामानाधिकरण्यरूपविरुद्धत्वस्य वक्ष्यमाणत्वादेकस्योदरान्तरालस्य युगपदल्पत्वमहत्त्वाङ्गीकारासम्भवात् । नान्त्यः , तथा सति प्रकृते दृष्टान्तघटनस्याशक्यत्वात् , उदरान्तरालस्य ह्यल्पत्वविरुद्धं महत्त्वं न स्वीक्रियते । तदभावेऽपि तु महदाधारत्वमभ्युपगम्यते । प्रकृते पुनः प्रत्यगात्मन्यन्तःस्थितिवचनेन निरवयवे तस्मिन्नन्तरवयववत्त्वमेव स्वीक्रियत इति भेदस्य जागरूकत्वात् । अत्र हि भावाभावयोः सावयवत्वनिरवयवत्वयोः सामानाधिकरण्यमेवापततीति ।

स्यादेतत् । वस्तुतत्त्वे विमृश्यमाने कथं पुनरल्पिष्ठ एव जठरे निखिलजगन्निक्षेप इति । नन्वयमेव व्याप्तिभङ्ग उपपादकः । यथा हि वस्तुषु परस्परप्रतिहन्यमानत्वे दृश्यमानेऽपि रूपरसादेस्तदभावः, द्रव्येष्वपि भूतान्तरेषु नभसः, स्पर्शवत्स्वपि सलिले पवनस्य, रूपवत्स्वपि तत्रैव तर-

णिकिरणस्य ; यथा च द्रव्यत्वाविशेषेऽप्यग्नेरौष्ण्यं जले शैत्यमित्येवम् ; तथा वस्तुवैचित्र्येण मन्त्रतपोयोगमहिमसम्पादितेन स्वाभाविकेन वा दृढपिहितगृहमध्यत एव बहिर्महात्मनां निःसरणम् , अत्यल्पगवाक्षरन्ध्रादिष्वात्मनः स्थूलशरीरप्रवेशनम् भूमौ निमज्जनमुन्मज्जनम्, अप्राकृतस्य भगवतो मङ्गलविग्रहस्याल्पिष्ठ एवावकाशे निखिलजगन्निक्षेपः , द्राघिष्ठदामसन्ततयन्त्रणेऽपि द्व्यङ्गुलावशेषः कपटगोपालकटितटस्यान्यच्च सर्वमुपपद्यत इति । यद्वा यथा खलु किञ्चिद्विलक्षणदर्पणसनाथेन चक्षुषा वीक्ष्यमाणमल्पमपि वस्त्वधिकपरिमाणमिव वीक्ष्यते तथैवान्तरुदरमतिसूक्ष्माकारमेव जगद्वर्तमानं तदात्व एव भगवत्सङ्कल्पादिसामग्रीसनाथेन चक्षुषा लक्ष्यमाणं बहिर्लक्षितजगत्तुल्याकारं लक्ष्यते । सा च सामग्री अप्राकृते भगवद्विग्रहे नान्यादृशपरिमाणप्रदर्शनाय प्रभवतीति युक्तमेवाल्पे महत्सत्ताग्रहणम् । अत एव 'वटपत्रशायिविग्रहवदघटितघटनाशक्त्या सूक्ष्मरूपेण वाऽल्पीयस्यपि सर्वान्तर्भावे' त्येवं श्रीतात्पर्यचन्द्रिकासूक्तिरिति ।

अथ स्रक्ष्यमाणस्य हरविरिञ्चमुखप्रपञ्चस्य सृष्टेः प्रागेवमुदरकुहरे निक्षेपसम्भवेऽपि, यत्रैष परमपुरुषः शेते, तस्यैकोदकस्य कालमहदहङ्कारादेश्च बहिष्ठानामन्तस्स्थितेर्वर्णयितुमशक्यत्वात्कथमुपपत्तिः । न चात्रैषामन्तर्वर्तित्वे प्रमाणाभावात् स्रक्ष्यमाणजगन्मात्रनिक्षेप एव स्वीक्रियते । तथा च तस्यैव स्रक्ष्यमाणस्य सङ्कोचशक्त्या, तत्सजातीयस्य वा सूक्ष्माकारस्य तत्र सद्भाव इत्युक्तैव गमनिका युक्तेति वाच्यम् । अथापि मृदं भक्षितवतो भर्त्सितस्य मायासुतस्य मुखं व्याददतो मध्येकुक्षि निखिलमैक्षत नन्दमहिषीति कथमुपपद्यतामिति ।

'एतद्विचित्रं सहजीवकालस्वभावकर्माशयलिङ्गभेदम् ।
सूनोस्तनौ वीक्ष्य विदारितास्ये व्रजं सहात्मानमवाप शङ्काम् ॥'

इति खलु श्रीभागवतवचनमिति । सत्यम्, यशोदाया अपि प्रत्यक्षबाधितं बहिरवस्थितिमन्तरेण सर्वेषामन्तरेवावस्थानम् । नापि बहिष्ठजीवकालादि-व्यतिरिक्तं जीवकालादिकं कथमप्यङ्गीकृतमस्ति, यस्यान्तरवस्थानं शक्यवर्णनं स्यात् । यद्यपि स्वप्ने जागरितावस्थानुभूतपदार्थव्यतिरिक्ता एव विलक्षणाः सृज्यमाना इष्यन्ते, तथाऽपि न मूलप्रकृत्यादिकमपि जागरितावस्थादन्यत्वेन शक्यं तत्र स्थापयितुं । नापि च तथैवावश्यं स्थापनीयम् । यदि कश्चित् स्वप्ने योगबलादन्यथा वा प्रकृत्यादिकमीक्षेत तर्हि स बहिष्ठमेव तदीक्षत इत्युक्तावपि न क्षतिः । जागरितावस्थायां तु तादृशयोगप्रभावादिविरहादेव न तदध्यक्षापत्तिः । प्रकृते पुनः प्रकृतिजीवकालादेर्बहिरपि दृश्यमानस्यान्तरपि दर्शनमुपपादनीयं संवृत्तमिति ।

अत्रोच्यते—बहिर्दृश्यमानस्य निखिलस्य प्रपञ्चस्य प्रतिबिम्ब एव वा प्रतिमैव वा कुक्षौ दृश्यते न वास्तवः प्रपञ्चः । दृष्टं चात्यल्पेऽप्यालेख्ये लिखितानि चित्राणि वास्तवपदार्थप्रतिमाप्रमाणतयैव परिदृश्यन्त इति । अतो न परिमाणदर्शनानुपपत्तिः । न च नीरूपस्य प्रतिमाद्यनुपपत्तिः । दर्पणादिषु नीरूपाकाशादिप्रतिबिम्बदर्शनवदुपपत्तेः । अथ तत्र दृश्यमानस्य व्यवहारस्य कथमुपपत्तिरिति चेत् न । हानोपादानसंचरणादेः सांप्रतिके यन्त्रविशेषे दृश्यमानत्वात् । शब्दव्यवहारो रसादिविज्ञानं च न तत्रेति चेन्न । एवंजातीयेन सामग्रीवैचित्र्येण तस्याप्यत्राभ्युपगन्तुं युक्तत्वात् । यद्वा न भगवतः कुक्षौ तदा वस्तुतः प्रकृतिः कालो जीवोऽन्यद्वा किञ्चित्समस्ति । सर्वं तु केवलं बहिरेव यथोपलम्भं स्वीक्रियते । कुक्षौ तद्दर्शनं तु, यथा श्रीभाष्यदर्शितदिशा द्विचन्द्रज्ञाने वस्तुतश्चन्द्रशून्यदेशस्य चन्द्रस्य च निरन्तरग्रहणेनाऽऽधाराधेयभावकल्पनया देशान्तरे चन्द्रदर्शनम्, यथा च दर्पणान्तर्वर्तित्वेन गृहगगनमहीरुहवलाहकादीनां दर्शनम्, तथा कुक्षिग्रहणकाल एव स्वगतपारमैश्वर्य-

प्रदिदर्शयिषाप्रवृत्तभगवत्सङ्कल्पवशेन सप्रकृतिकालजीवस्य सकलप्रपञ्चस्य निरन्तरग्रहणेन कुक्षिप्रपञ्चयोराधाराधेयभावकल्पनया भवति । द्विचन्द्रज्ञाने चक्षुस्सन्निकर्षविशेषवत् जगद्दर्शनकारणमेव दिव्यचक्षुरादिकं किञ्चिद्वैलण्यमापादितमिह सामग्र्यनुप्रविष्टम् । अतो महामायिनो मायाकार्यमिदमनाधारेऽप्याधारताग्रहणम् । यद्यपि सूक्ष्मस्यापि स्थूलाधारत्वं सम्भवति अथापि सूक्ष्मान्तरवस्थानं स्थूलस्यैवमेवोपपादनीयम् । तस्मान्न यशोदाकृतविश्वदर्शनमनुपपन्नम् । तथा चेदमुक्तं भवति । यत्र विषयविशेषे सङ्कोचशक्त्या विकासशक्त्या सजातीयसूक्ष्माद्युत्पादनशक्त्या वा निर्वाहो न शक्यस्तत्रैवेयं कल्पना । तावताऽपि न वस्तुमिथ्यात्वम् । वस्तुसत एव तु केवलमन्तर्वर्तित्वादिकमन्यथोपपाद्यत इति । सर्वमिदमेवम्भूतमभिप्रेत्य च **सर्वार्थसिद्धौ** 'सङ्कोचशक्तिर्विकासशक्तिस्तत्तदभिमानविषयसजातीयोत्पादनशक्तिः सूक्ष्मस्थूलावस्थाभेदः परिमितविग्रहव्यङ्ग्यापरिमितस्वरूपलक्षणमित्यादिकं यथार्हमवधारणीय'मिति,

> 'यदल्पपरिमाणेन पृथूनां ग्रसनं स्मृतम् ।
> अचिन्त्यमिदमित्येके चिन्तनश्रमभीरवः ॥ ' इति च ।

सर्वथा तावदन्तरुदरमशेषजगत्स्थितिदृष्टान्तेन निरवयवे प्रत्यगात्मन्यन्तस्स्थितिस्थापनमशक्यमिति सिद्धम् ।

यत्पुनरनन्तर'मथैवमपी'त्यारभ्य दशभिर्वाक्यैर्विभुतोऽपि विभुतरत्वस्य परमात्मनि स्थापनम् ; तदणुविषयविचारं समाप्यावसरे विचारयिष्यते ।

यत्तदुपरि 'न हि खलु कस्मिंश्चिद्वस्तुनि बाहिर्मात्रसम्बद्धं किञ्चिद्वस्तु तदन्तर्यामित्वेनानुन्मत्तः कश्चिद्व्यपदिशे' दिति ; सोऽपि कश्चिदसद्योऽपचारो भवतः, यतो भगवन्तो भाष्यकृत एव तथा व्यपदिशन्ति । तथा हि जिज्ञासाऽधिकरणे परप्रदर्शितगीतावचनार्थवर्णनप्रकरणे "क्षेत्रज्ञं चापि मां विद्धि-

त्यादिनाऽन्तर्यामिरूपेण सर्वस्यात्मतयैक्याभिधान" मिति, "अन्तर्यामिरूपेण सर्वेषामात्मत्वं तत्रैव भगवताऽभिहितम् 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठती'ति 'सर्वस्य चाहं हृदि सन्निविष्टः' इति च । 'अहमात्मा गुडाकेश सर्वभूताशयस्थित' इति च तदेवोच्यत' " इति च भाषितम् । यदि पुनरात्मनोऽन्तरवयवं कञ्चिदङ्गीकृत्य तत्र परमात्मनः स्थित्यनभ्युपगमेऽन्तर्यामित्वमेव दुर्वचम्, तर्हि कथं तादृशार्थवर्णनपरे वचने प्रमाणीकरणीये केवलमात्मसंबन्धिहृदयसम्बन्धमात्रोपपादकं वचनजातमुदाहृत्यान्तर्यामित्वभाषणं युज्येत । न च भूतशब्दसर्वशब्दयोर्जीवपर्यन्तवाचित्वाज्जीवान्वय्यर्थकहृद्देशादिपदस्य तदीयान्तरवयवपरत्वं वाच्यमितीष्टसिद्धिरिति मन्तव्यम् । अन्तथैव भूतादिपदोत्तरषष्ठ्युपपत्तौ शक्यार्थपरित्यागेन अन्यार्थकल्पनस्यायुक्तत्वात् । व्यासार्यैरन्यथा व्याख्यातत्वाच्च । अतस्तदन्तर्यामित्वोपपादनाय तत्सम्बन्धिदेशसम्बन्ध एवापेक्षितः । न तु तदन्तरवयवसम्बन्ध इत्येव भगवद्भाष्यकाराशयो निस्पष्टमवसीयते । अत्र गीताद्यभिहितं तत्सम्बन्धिदेशसम्बन्धित्वं च , मूर्तद्वयसमावेशासम्भवप्रयुक्तं घटपटयोर्यादृशं भूतले गौणं स्वीक्रियमाणम् , न तादृशम् । अपि तु अप्रतिहन्यमानतया साक्षात्तत्सम्बन्धिप्रदेशसम्बन्धित्वमेव । इदमेव दर्शयितुं 'हृद्देशेऽर्जुन तिष्ठती'ति देशपदमधिकं गीतायाम् । तथा च सर्वभूतशब्दवाच्यजीवावच्छेदकहृद्देशस्थित्युक्त्या तादृशहृत्प्रदेशावच्छेदेन स्थित्युक्त्या वा हृद्देशावच्छिन्नजीवसम्बन्धित्वसिद्धौ, यद्वस्तु यत्प्रदेशावच्छेदेनास्ति तत्प्रदेशावच्छेदेन तत्सम्बन्धित्वमेवान्तर्यामित्वप्रयोजकमित्युक्तं भवतीति भाष्यकृदाशयः । इममाशयमाविष्कर्तुमेव व्यासार्याः 'हृद्देशे-हृद्देशस्थ आत्मनीत्यर्थः' इति व्याचख्युः । न पुनर्हृद्देशपदस्य तादृशार्थलक्षकत्वे तेषां तात्पर्यम् । अयुक्तत्वात् । आत्मासम्बन्धिहृदयप्रदेशो मा ग्राहीति तात्पर्यवर्णनेन शक्यार्थग्रहणेनैव सर्वोपपत्तेः ।

अस्तु वा स्पष्टप्रतिपत्तये लक्षणा । भवदभिमतविवक्षायां पुनरिमां गुर्वीं लक्षणामुपेक्ष्य लघ्वीमपेक्षितार्थप्रदर्शिनीमात्मान्तरवयवविषयिणीमेवाश्रितवन्तः स्युरिति । अतो भाष्यकृदाशयमाचार्यमुखादवगत्यान्तरवयवमनङ्गीकृत्य भवदभिमतबाहिःसम्बन्धमात्रेणान्तर्यामिशब्दं व्यवहरमाणा एवानुन्मत्ताः, यथा भाष्यकृतो यथा च गीताचार्य इति कृतमधिकेन ।

यदप्युक्तं—कृत्स्नप्रसक्त्यधिकरणे 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वे'ति सूत्रेण 'ब्रह्मणो निरवयवत्व एकस्मिन्नेव कार्ये कृत्स्नोपयोगप्रसङ्गेन न बहुभवनं कार्यानुपयुक्तांशस्थितिश्च स्यात् । सावयवत्वे च निरवयवत्वशब्दकोप' इत्याशंक्य 'श्रुतेस्तु शब्दमूलत्वात्' इत्यनेन शब्दैकसमधिगम्यत्वाद्धर्मिग्राहकबलेन ब्रह्मणो निरवयवत्वेऽपि बहुभवनकार्यानुपयुक्तांशस्थित्याद्युपपद्यत इति सिद्धान्तितम् । अतः परमात्मनोऽन्तरंशाङ्गीकारेण तत्र सकलजगत्सद्भावः स्वीकर्तुमुचितः । ततश्चानयैव परमात्मन्युक्तया प्रक्रियया प्रत्यगात्मनोऽपि निरवयवस्यान्तरवयवे परमात्मस्थितिः शक्या स्वीकर्तुम् । अत्राप्यन्तर्व्याप्तेः श्रुतिभिः स्वयमेव जोघुष्यमाणत्वात् । अत्रेदमवधेयम्—अन्तश्शब्दो हि नानांशमध्यावकाशपरः । अतोऽन्तश्शब्दबलेन सावयवत्वस्य स्वीकार्यतया निरवयवत्वव्यवहारो वस्तुस्वरूपारम्भकानेकांशात्मकत्वाभावनिबन्धनः सांशत्वव्यवहारोऽनादिसिद्धानेकांशात्मकत्वनिबन्धन-इति ;

तदप्यापातरमणीयम् । तथा हि—न तावन्निरवयवत्वं तथैवाभ्युपेत्य बहुभवनाद्यनुरोधेन श्रुतिबलात् सावयवत्वमपि स्वीकर्तव्यमिति सूत्रकृदाशयः शक्योन्नयनः, सावयवत्वनिरवयवत्वयोः परस्परविरोधात् । विरुद्धयोरपि समावेशे सम्मन्यमाने जितं जैनेनेति 'नैकस्मिन्नसम्भवात्' इति सूत्राय दत्त एव जलाञ्जलिः । भाष्यकृत्प्रतिक्षिप्ता भेदाभेदवादिनोऽपि बा-

ढं प्रत्यवतिष्ठेरन् । एवं च सति नित्यत्वानित्यत्वजडत्वाजडत्वाणुत्वमहत्त्वाद्यशेषविरुद्धधर्मसमावेशसम्भवेनानेकान्यधिकरणान्यनर्थकानि स्युः । अणोरणीयान्महतो महीयानिति श्रुतेश्चाणुतरपरिमाणकत्वमपि परस्य सुग्रहमिति न कुत्राचिदर्थान्तराविरोधेन तात्पर्यान्तरवर्णने यतितव्यम् । अतो नान्तरवयवं निरवयवस्यैव स्वीकृत्य सावयवत्वनिरवयवत्वयोः समावेशः सुवचः । ननु तर्हि धर्मिग्राहकबलेन विरुद्धसमावेशोऽपि न दुष्यतीत्यर्थपरं श्रुतेस्तु शब्दमूलत्वादिति सूत्रं न सङ्गच्छते । उच्यते । द्वेधा विरोधो भवति, तदभावात्मकतया तदभावात्मकवस्तुव्याप्यतया च । तत्र तद्वत्तया प्रमिते वस्तुनि तदभावात्मकधर्मवत्ताप्रत्यायकं किमपि मानं प्रसजति, तत्र तस्य मानस्यान्यथाकरणेन तादृशविरुद्धधर्मसम्बन्धो निराक्रियते । यत्र तु तद्वत्तया प्रमिते वस्तुनि तदभावात्मकधर्मव्याप्यतया साहचर्यादिबलेनावधृतधर्मवत्ताप्रत्यायकं किमपि मानम्, तत्र तस्य मानस्य बाधकान्तराभावे तद्वत्ताप्रमितिमात्रेण नान्यथाकरणम् । अपि तु प्रत्यायितस्य धर्मस्य तदभावात्मकधर्मव्याप्यत्वावधारणस्यैव साहचर्यादिबलायत्तस्यायथार्थीकरणम् । तथा चास्य धर्मस्य तदभावव्याप्यत्वाभावेन तेन सहाविरोध एवाङ्गीक्रियते । यथा पृथिवीत्वस्य जलत्वाभावरूपतया जले पृथिवीत्वसम्बन्धो निराक्रियते । जलत्ववत्तया प्रमिते हिमकरकादौ पृथिवीत्वव्याप्यत्वेनावधृतकाठिन्यप्रत्ययेन पृथिवीत्व आपाद्यमाने काठिन्यस्य पृथिवीत्वव्याप्यत्वावधारणमन्यथयित्वा जलत्वकाठिन्ययोरविरोध एवाङ्गीक्रियते । एवमुदाहरणानि द्रष्टव्यानि । एवं च जैनैर्यो भावाभावयोरेव समावेशोऽभिमतः स 'नैकस्मिन्नसम्भवादि' ति निराकृतः । अत्र तु कृत्स्नप्रसक्त्यधिकरणे लोके सावयवस्यैव मृत्पिण्डादेर्घटशरावादिबहुभावकत्वदर्शनेन, यतो यतो बहुभवनं तत्र तत्र सावयवत्वमिति व्याप्तिं स्वीकृत्य निर-

वयवस्य ब्रह्मणः कथं बहुभवनमिति शङ्कायां निरवयवत्वबहुभवनयोरुभयोः प्रमाणप्रतिपन्नत्वेन सावयवत्वबहुभवनयोर्व्याप्तिरेव तिरस्कार्येत्युच्यते । एवमेव निमित्तत्वस्योपादानत्वाभावव्याप्यतां लोकतोऽवगत्य शङ्कमानाय प्रमाणबलान्निमित्तत्वोपादानत्वयोर्ब्रह्मणि समावेशाङ्गीकारेण सा व्याप्तिरेव व्युदस्यते । यदि प्रतीयमानार्थस्य स्वगृहीतव्याप्तिश्रद्धया न स्वीकारस्तर्हि द्रव्ये सर्वत्रौष्ण्यविरुद्धधर्मस्यैवोपलम्भेन द्रव्यत्वेन हेतुनाऽग्नेरनौष्ण्यमेव स्वीकार्यं स्यात् । एवं जलादावशैत्यादिकमिति । अतो न मिथो विरुद्धधर्मभावाभावयोःसमावेशतात्पर्यकमिदमधिकरणम् । अपि तु कस्यचिद्धर्मस्य साहचर्यादिमात्रेण किंचिद्धर्माभावव्याप्तिनिश्चयविधूननेन तयोर्धर्मयोस्समावेशतात्पर्यकम् । अत एव भाषितम्, 'न सामान्यतोदृष्टं साधनं दूषणं वाऽर्हती'ति ब्रह्मे'ति । अतो निरवयवत्वं स्वीकृत्य नान्तरवयवत्वरूपं सावयवत्वं स्वीकर्तुं शक्यम् । नन्वेवमवयवस्वीकाराभावे कार्यकाल एव ब्रह्मणः कार्यानुपयुक्तांशोऽप्यस्तीत्यंशव्यवहारः कथं घटतामिति चेत् कथं तर्हि नैयायिकमते निरवयवे वियति 'अत्र प्रदेशे सुपर्णः पतति न तत्रे'ति प्रदेशव्यवहारः । औपाधिकव्यवहारोऽसाविति चेत् इहापि कार्यात्मना परिणतप्रकृत्यवच्छिन्नस्य ब्रह्मणः कार्योपयुक्तांशत्वव्यवहारः, महदादिपरिणामानवच्छिन्नप्रकृतिनित्यविभूत्यवच्छिन्नस्य ब्रह्मणः कार्यानुपयुक्तांशत्वव्यवहार इति तुल्यम् ।

अत एव यथाश्रुतनिरवयवत्वस्वीकारेणैवोपपत्तौ '**निरवयवत्वस्वीकारो वस्तुस्वरूपारम्भकानेकांशात्मकत्वाभावनिबन्धन**' इत्यपि निरस्तम् । एतावन्मात्रेण चेन्निरवयवत्वव्यवहारस्तर्हि नित्यदिव्यमङ्गलविग्रहनगरगोपुरमण्टपादिष्वपि तदापत्तिश्च । किञ्च यदि वस्तुस्वरूपारम्भकावयवशून्यतामात्रेण गौण एव निरवयवत्वव्यवहारो ब्रह्मणि सूत्रकृदभिमतः स्यात्तर्हि निरवयवत्वशब्दकोपो वेति न पूर्वपक्षितं स्यात् । सिद्धान्ते यथा-

श्रुतार्थानङ्गीकारेण तस्य कोपस्य शान्त्यभावात् । न खलु निरवयवशब्दः पृथक्काराहावयवशाल्यर्थकत्वे कुप्यति तदनर्हावयवशाल्यर्थकत्वे तु तुष्यतीत्यत्र किञ्चित् प्रमाणम् । न च निरवयवत्वशब्दकोप इत्यनेन 'सावयवत्वाद-नित्यत्वं स्यादि'ति शङ्कैवाभिमतेति वाच्यम् । तथा सति निरवयवत्वे कृत्स्न-प्रसक्तिः सावयवत्वेऽनित्यत्वमित्येव पूर्वपक्षसिद्ध्या 'कृत्स्नप्रसक्तिर्नित्यत्वशब्द-कोपो वे'त्येव सूत्रं प्रणेतव्यं स्यात् । सिद्धान्तसूत्रं वा 'श्रुतेस्तु नित्यं श-ब्दमूलत्वा' दिति कर्तव्यं स्यात् । अतः सावयवत्वे दिव्यविग्रहादिवन्नि-त्यत्वं वा घटपटादिवदनित्यत्वं वा किमपि सिद्ध्यतु न तत्प्रकृतम् । किन्तु सावयवत्वस्वीकारे निरवयवत्वश्रुतिविरोध इत्येतावदेव पूर्वपक्षिशङ्कितम् । अत एव भाष्यादावनित्यत्वाऽऽपादनादिकमीषदपि न स्पृष्टम् । अतःकृत्स्न-स्यापि ब्रह्मणः कार्य एवोपयुक्तत्वप्रसङ्गः, सावयवत्वे तु निरवयवत्वभङ्ग इति शङ्कायां श्रुतेस्त्वित्यनेन कार्त्स्न्येनानुपयुक्तत्वं निरवयवत्वं च साध्यत इत्येव वक्तव्यम् । तत्र च पूर्वपक्षिणा यादृशं निरवयवत्वं न सिद्ध्यतीति श-ङ्कितम् । तादृशं निरवयवत्वमेव सिद्ध्यतीति वक्तव्यम् । पूर्वपक्षिणश्च निरवयवशब्दार्थे यादृशे सति कृत्स्नप्रसक्तिः शङ्कितुं शक्यते तादृश एव तदर्थ इष्ट इत्यपि स्वीकर्तव्यम् । सावयवत्वं तावत् पृथक्कारार्हैरनर्हैर्वा कैरप्य-वयवैर्भवतु । सर्वथा सावयवत्वस्यागतत्वात् पृथक्काराहावयवराहित्यस्वीकारे तदनर्हावयववत्त्वलाभेन न कृत्स्नप्रसक्तिः सुवचेति सर्वविधावयवराहित्यमेव निरवयवत्वं पूर्वपक्षीष्टम् । तादृशार्थकनिरवयवत्वशब्दकोप एव चापा-दित इति स्वीकार्यमिति सिद्धान्तिनाऽपि तदेव सर्वविधावयवराहित्यरूपं निरवयवत्वं साधनीयमिति न कथञ्चिद्गौणनिरवयवत्वग्रहणप्रसक्तिः ।

अपि च भाष्यकृद्भिः 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय' मि-त्यादिश्रुत्यवगतैकत्वबलेन निरवयवत्वमत्र भाषितम् । तेन चेदमवसीयते

'योऽयं सावयवः पदार्थो घटपटादिस्तस्य वस्तुतोऽवयवसमुदायरूपत्वादवयव्यन्तरोत्पादस्य चारम्भणाधिकरणे निरस्तत्वात्तत्रैकत्वव्यवहारो गौणः । अत एव वर्णसमुदायात्मनि वाक्ये एकं वाक्यमिति व्यवहारो विशिष्टार्थविषयकैकप्रतीतिप्रयोजकत्वनिबन्धन इत्युक्तं न्यायरत्नमालायाम् । अतो धान्यराशावेको व्रीहिरिति व्यवहारस्येव गौणत्वान्मुख्यजिज्ञासायां निरवयवे क्रियमाण एकत्वव्यवहार एव तथैष्टव्यः । न च ब्रह्मणि प्रयुक्तमेकमिति पदं गौणैकत्वपरमित्यत्र प्रमाणमस्तीति मुख्यैकत्वसिद्ध्या ब्रह्म निरवयवं भवतीति तेषामाशय' इति । एवं च यादृशं निरवयवत्वमेकपदलब्धं तस्यैव सिद्धान्ते स्वीकार्यतया सर्वविधावयवराहित्यमेव निरवयवत्वमिति निश्चीयते । अन्यथा पृथक्कारानर्हावयवसमुदायरूपत्वस्यैव ब्रह्मणि सिद्ध्या पुनरेकत्वव्यवहारस्य गौणत्वानपायेन निरवयवत्वस्यैवासिद्ध्या तस्य किञ्चिद्रूपेण परिष्करणस्यानयसरत्वात् । अतो भवदुक्तनिरवयवत्वस्यानुपपन्नत्वादंशव्यवहारस्य चान्यथा सिद्धत्वान्निष्कलमित्यादेः सङ्कोचे प्रमाणाभावात् सूत्रभाष्यस्वारस्याच्च सर्वविधावयवराहित्यरूपमेव निरवयवत्वं सिद्धान्तिसंमतमिति परमात्मन एव सावयवत्वस्यासिद्धतया तद्दृष्टान्तेन प्रत्यगात्मनः सावयवत्ववर्णनमन्धस्य जात्यन्धेन यष्टिप्रदानमेवेति ।

अत्रेदं बोध्यम्——अस्मिन्नधिकरणे हि कृत्स्नप्रसक्तिनिरवयवत्वानापत्तिशङ्कां श्रुतेस्त्विति परिहृत्यानन्तरमेव 'आत्मनि चैवं विचित्राश्च हि' इति सूत्रितम् । अत्र पूर्वखण्डस्य चायमर्थः—सामान्यतोदृष्टयत्किञ्चिल्लिङ्गबलेनान्यदीयधर्मस्यान्यत्राप्यावश्यकत्वे सति जीवात्मन्यपि परकीयधर्मप्रसक्तिरिति । अत्र च परिदृश्यमानघटादिधर्माणामनित्यत्वाचेतनत्वादीनां वस्तुत्वादिलिङ्गेनात्मन्यापादनं यथा, तथैवाविशेषादेतदापादनमप्यभिमतं सूत्रकृताम् । सूत्रगमनिकास्वारस्यपर्यालोचने च प्रकृतत्वादिदमवश्यमभ्युपेत्यम्—

यत्— निरवयवस्य ब्रह्मणः कृत्स्नप्रसक्तिं निरवयवत्वानुपपत्तिं चास्मान् प्रति सांख्यस्तार्किको वा यदि कथयेत् तर्हि वादिप्रतिवादिनोरुभयोरपि निरवयवत्वेन संप्रतिपन्ने जीवात्मन्यप्ययं दोष आपद्यते । तन्मते निरवयवस्याप्यात्मनो विभुत्वेन सर्वमूर्तसंयोग इषितः । न चायं सम्भवति, निरवयवत्वे- नैकमूर्तसंयोग एव कृत्स्नस्योपक्षीणतया मूर्तान्तरसंयोगासम्भवात् । न हि घटसंयुक्तो भूतलप्रदेशः पटेनापि संयुज्यते । न च संयोगस्याव्याप्यवृत्तित्वान्नानुपपत्तिरिति वाच्यम् । तस्यैवेह दुर्वचत्वात् । सावयवे हि पदार्थे एकस्मिन्नवयवे संयोगोऽवयवान्तरे चासंयोग इत्यवयवभेदप्रदर्शनेन व्याप्यवृत्तित्वाभावः संयोगस्य सूपपादः । निरवयवे तु तदसम्भवाद्व्याप्यवृत्तित्वमेव स्यात् । एवं तन्मते सौभरिप्रभृतीनामनेकदेहभाक्त्वमप्यङ्गीकृतं न सङ्गच्छते । एकेन देहेन कृत्स्नोऽप्यात्मा देहितामापन्न इति कथं तदैवान्येनापि देही भवितुमलम् । अत एकत्रैव कृत्स्नप्रसक्तिर्भवति । सावयवत्वे तु निरवयवत्वसिद्धान्तकोपः । एवमस्मन्मत आत्मनोऽणुत्वेऽपि निरवयवतया दशदिक्सम्बन्धः स्वीकृतो न शक्य उपपादयितुमिति । न चेदृशार्थवर्णने 'स्वपक्षदोषाच्चे' त्यनेन पौनरुक्त्यं मन्तव्यम् । तस्य सूत्रस्य पूर्वपक्षिमात्रसम्मतजगदुपादानभूतप्रकृतिपरमाणुविषयत्वात् । अस्य चोभयसम्मतनिरवयवत्वजगदुपादानत्वाश्रयजीवात्मविषयत्वात् । अत इदं सूत्रं निरवयवत्वनिबन्धनदोषं पूर्वपक्षिशाङ्कितमुभयमतेऽप्यन्यत्र प्रसज्यमानं प्रदर्श्य भाववैचित्र्येणैव सम्प्रतिपत्तव्येन तत्परिहारवचनपरमिति स्वारस्याद- वसीयते । यद्वा श्रुतेस्तु शब्दमूलत्वादिति परमात्मन्यकृत्स्नप्रसक्तिनिरवयवत्वे उपपाद्यात्मन्यपि श्रुत्येकसमधिगम्येऽस्मन्मत एवमेव सम्भावितानुपपत्तिपरिहार इति आत्मनि चैवमिति सूत्रखण्डेन दर्शयन् स्वपक्षदोषाच्चेत्यनेन सांख्यतार्किकमते केवलतर्केणानुमीयमानत्वात् तत्रैव जीवप्रधानपरमाणुविषये

लोकदृष्टप्रसङ्ग इति सर्वसाधारण्येन ब्रवीतीति । भाष्ये च 'घटादौ दृष्टा धर्मा' इति बहुवचनान्तधर्मपदेन सावयवत्वादेरपि ग्रहणादयमर्थस्सिद्ध्यतीति ध्येयम् । अतो यदधिकरणे सावयवत्वसाधकमुपात्तम् , तदधिकरणसूत्रतद्भाष्यादिस्वारस्येनैव सिद्धं जीवात्मनोऽपि निरवयवत्वम् ।

किञ्च सूत्रकारैः '**स्वशब्दोन्मानाभ्यां च**'ेति सूत्रेण श्रुतावणुशब्दश्रवणाज्जीवस्याणुत्वमित्युक्तम् । अत्र च 'अणोरणीया' नित्यादौ परमात्मनीवाणुशब्दस्य न गौणत्वम् , मुख्यार्थत्यागायोगादित्याशयः स्फुटोऽवगम्येत । अन्यथा विभोरपि जीवस्य सूक्ष्मतयैवाणुव्यवहारोपपत्तेः । एवं च यदि तस्य सावयवत्वम् , तर्हि तत्राणुशब्दो भाक्त एव भवति, बिल्वापेक्षयाऽऽमलक इवाणुशब्दः । न च सर्वस्यापि पदार्थस्य सावयवतायाः एवेष्टत्वेन जीवापेक्षयाऽल्पसंख्याकावयवशाल्यर्थान्तराभावेनात्रैव मुख्यवृत्तोऽणुशब्द इति वाच्यम् , प्रकृतिपरिणामभूतेषु तथाभूतेषु सावयवेषु वस्तुष्ववयवविशरणाभावे प्रमाणाभावात् । तादृशवस्त्वन्तराभावेऽपि जीवस्यावयव एकैकस्मिन्नेवाणुशब्दमुख्यवृत्तत्वोपपत्तौ जीवे कृत्स्ने तद्व्यवहारस्य भाक्तत्वस्यैवौचित्याच्च । न खलु पूर्ण एव वस्तुनि मुख्यवृत्तत्वं संपादनीयम् , नत्वेकदेश इत्यत्र किञ्चित् प्रमाणमस्ति । अतः सूत्रकाराभिमतमुख्यवृत्तत्वसंरक्षणाय निरवयवत्वमेव स्वीकार्यम् । अत एवोक्तं प्राणाणुत्वाधिकरणे श्रुतप्रकाशिकायाम्—"अणुत्वं नाम परिच्छिन्नत्वे सत्युपलब्ध्यर्हस्थूलताराहित्यमत्र विवक्षितम् । न तु जीवात्मस्वरूपवदत्यन्ताल्पत्व"मिति । अत्र चात्यन्तपदेन जीवतोऽप्यणुरंशो न कश्चिदिति ज्ञायते । एवमुन्मानश्रुतिरपि न भवत्पक्षे स्वरसा । 'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः' इति श्रुतेर्ह्ययमभिप्रायः स्वरसः 'यावन्तो भागा वालाग्रे कल्पयितुं शक्यास्तावत्सु कल्पितेषु तात्रदन्यतमस्य यत्परिमाणं त-

ज्जीवस्येत्यत्यन्ताणुत्वमस्ये' ति ।

यत्पुनरवगतेऽपि निरवयवत्वेऽन्तःपदार्थसंरक्षणाय तस्यान्यथा नयनमिति; तन्न । सावयवत्वमन्तरेणान्तःपदस्वारस्यसिद्धिरिति पक्षाङ्गीकारेऽपि तत्परित्यागेन निरवयवत्वरक्षणस्यैवोचितत्वात् । अन्यथा 'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधे'तिश्रुतिगतैकधादिपदस्वारस्यरक्षणाय 'अच्छेद्योऽयमदाह्योऽय' मित्यवगताच्छेद्यत्वस्य त्यागप्रसङ्गात् । अतः स्वसङ्कल्पाधीनभेदसद्भावेऽपि बाह्यवस्तुकारितभेदाभावात्'नैनं छिन्दन्ति शस्त्राणी'त्यच्छेद्यत्ववचनं नेतुं शक्यमिति मुक्तौ जीवस्य स्वेच्छया स्वात्मविभजनमिष्यताम् । उक्तं च श्रुतप्रकाशिकायां (4-4-5) 'द्विधाशब्दादीनां धर्मिभेद एव स्वारस्यम् । 'तदण्डमकरोत् द्विधेत्या' दिप्रयोगात् । द्रव्यत्वपृथिवीत्वादिजाति-संयोगादिगुण-परिस्पन्दरूपक्रियासहस्रान्वितेऽपि घटे 'द्विधा त्रिधा सहस्रधाऽभूदि'ति प्रयोगाभावाच्चे'ति । अस्त्वेवमिति चेत् तर्हि 'आत्मन एकस्याच्छेद्यस्यानेकधाभावासम्भवात् त्रिधाभावादयः शरीरनिबन्धना इत्यवगम्यत' इत्यभावाधिकरणभाष्यव्याकोपः । अतो यथा तत्राच्छेद्यत्वस्य यथाश्रुतस्य रक्षणाय त्रिधाभवनादिकं शरीरद्वारकमस्वरसेमेवष्यते, तथा प्रकृतमन्तःपदमपि निरवयवत्वसंरक्षणाय जिज्ञासाधिकरणे क्षेत्रज्ञं चेति गीतार्थवर्णनपरभाष्यदर्शितदिशाऽऽत्माधिकरणशरीरान्तःप्रदेशपरमङ्गीकार्यम् । किं चानेनैव भाष्येण निरवयवत्वसंरक्षणार्थमपि त्रिधाभावादिकमन्यथा नेयमित्यवगम्यते । अत्र ह्येकस्याच्छेद्यस्येति पदद्वयमपि हेतुगर्भविशेषणम् । एकस्येति च निरवयवस्येत्यर्थकम्, अन्यथा तत्पदवैयर्थ्यात् । मृत्पिण्डवदेकत्वग्रहणे घटशरावादिवदनेकधाभावसम्भवात् छेदार्हावयवराहित्यरूपैकत्वविवक्षणे अच्छेद्यस्येति पौनरुक्त्यापत्तेश्च सर्वविधावयवराहित्यरूपमेकत्वमेव कृत्स्नप्रसक्त्यधिकरणे 'एकमेवाद्वितीय' मित्यत्राभिमतया दिशा विवक्षितमि-

त्यध्यवसीयते । एवञ्च निरवयवत्वादच्छेद्यत्वादेनकधाभावो न सम्भवतीत्युक्त्वा श्रुत्यन्तरमन्यथा नीत्वा निरवयवत्वमेव संरक्षणीयमिति भाष्यतात्पर्यनिश्चयादन्तःपदमपि तदर्थमेवान्यथा नेयम् ।

अपि च कतमा श्रुतिः प्रत्यगात्मनोऽन्तरवयवं साधयति ? किं 'अन्तः प्रविष्टः शास्ता जनाना' मिति , किं वा 'तदन्तरस्य सर्वस्ये'ति, आहो 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणःस्थित' इति, अथ वा'ऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवे'ति, यद्वा 'य आत्मनि तिष्ठन्नात्मनोन्तर' इति, अन्या वा काचिदिति ।

न प्रथमा ; अन्तःप्रवेशशास्तिभ्यां नृपगगनव्यावृत्तिरिति व्यासार्यैरुक्तत्वात् । अन्तरवयवाङ्गीकारे तत्राचेतनगगनप्रवेशासम्भवादेव गगने अतिव्याप्त्यभावेन तद्व्यावृत्तिप्रयोजनकथनस्यायुक्तत्वापत्तेः । जीवावच्छेदकहृदयप्रदेशग्रहणे चातिव्याप्तिप्रसक्त्या तस्यैव युक्तत्वात् । जनानामिति पदस्य देहविशिष्टात्मवाचितया पण्डितस्यास्य बाल्यं न गतमित्यादौ बाल्यस्य शरीरगतत्वावगमवदन्तःशब्दार्थस्य देहसम्बन्धित्वावगमसम्भवेनान्यथासिद्धत्वाच्च । अत्यन्तस्वारस्यरक्षणश्रद्धायां प्रविष्टपदस्वारस्यस्यापि रक्षणीयतया परमात्मनो विभोरपि कञ्चित्कालं तदसम्बन्धस्यापि स्वीकर्तव्यत्वापाताच्च ।

न द्वितीया ; अन्तश्शब्दस्यान्तरवयवपरत्वे तदनुरोधेन सर्वशब्दस्याणुव्यतिरिक्तविषयत्वेन सङ्कोचस्यैव युक्तत्वात् । यथा 'न हिंस्यात् सर्वा भूतानी'त्यत्र सर्वपदस्य 'अग्नीषोमीयं पशुमालभेते'त्याद्यवगतविहितहिंसाया निषेधायोग्यत्वेन निषेधान्वययोग्यविषयकतया सङ्कोचः , यथा च 'ये वै के चास्माल्लोकात्प्रयान्ति चन्द्रमसमेव ते सर्वे गच्छन्ती'ति श्रुतसर्वशब्दस्यानिष्टादिकारिणां 'तेनासौ लोको न सम्पूर्यत' इति द्युलोकाप्राप्तिवचनादिष्टादिकारिमात्रविषये संकोचस्तद्वत् । सर्वशब्दो हि सावकाशो न निरवयव-

तया निश्चितमपि ग्रहीतुं प्रभवति । न च तर्हि परमात्मव्याप्तिः प्रत्यगात्मनि न सिद्ध्यतीति शंक्यं, प्रमाणान्तरेण तत्सिद्धेः । अतो यथा 'सर्वस्यापि मनोरथमीश्वरो जानाती'त्यत्र सर्वपदेन नाचितनग्रहणं तथैवेहापीति ।

अत एव न तृतीया । किञ्चात्रान्तर्बहिश्चेत्यस्य केवलमनुवादरूपत्वात् अनुवादस्य च सम्भावितावयवकपदार्थविषयतयाऽप्युपपत्तेर्जीवान्तरवयवसाधकत्वं न सम्भवति । अत्र हि व्याप्येति श्रूयेत । व्याप्तिश्च कृत्स्नसम्बन्धः । एकदेशमात्रसम्बन्धे तत्प्रयोगादर्शनात् । अतस्तेनैव कृत्स्नसम्बन्धावगमात् सावयवे निरवयवे सर्वत्र कृत्स्नसम्बन्धलाभेनानुवाद एवान्तर्बहिःपदद्वयम् । न चान्तर्बहिरित्येव विवक्षितम्, व्याप्येत्येव त्वनुवाद इति वाच्यम् । अन्तर्बहिरित्यस्य विवक्षितत्वे निरवयवपदार्थाग्रहणेन सर्वपदसङ्कोचस्य वा निरवयवस्यापि ग्रहणे निरवयवशब्दार्थान्यथाकरणस्य वा प्रसङ्गेन तादृशदोषाभावायैव व्याप्येत्यस्य ग्रहीतुमुचितत्वात् । सर्वमिति द्वितीयान्वयाय व्याप्येत्यस्य विवक्षणीयत्वाच्च । स्थित इति प्रधानक्रियान्वयिल्यप्प्रकृत्यर्थविवक्षयैव फलसिद्ध्या तद्विशेषणीभूतान्तर्बहिश्शब्दार्थविधानस्यैव युक्तत्वाच्च । अन्तर्बहिश्शब्दार्थविधानेऽपि गृहस्यान्तर्बहिश्चेदं दारु वर्तत इत्यादाविव कतिपयान्तरवयवकतिपयबाह्यवयवसम्बन्धेनापि वाक्योपपत्त्या कृत्स्नव्याप्तेरवश्यसिद्ध्यभावेन व्याप्यशब्दार्थविधानस्यावश्यकत्वाच्च । अत एवान्तर्बहिश्शब्दमात्रेण व्याप्त्यलाभं मनसि कृत्वाऽऽचार्यपादैः 'तदेतद्व्यक्तमुक्तं तैत्तिरीये' इत्यारभ्य व्याप्यपदघटितमिदं वचनमुदाहृतम् । अतो वचनान्तरविहितस्य निरवयवत्वस्य नानुवादरूपान्यथासिद्धान्तर्बहिःपदबाध्यत्वप्रसक्तिः । यदि पुनस्तद्व्यापित्वं न तदीययावत्प्रदेशसम्बन्धित्वरूपम् ; किं तु तत्समानाधिकरणाभावाप्रतियोगित्वरूपम्, यथा 'धूमं व्याप्य स्थितो वह्नि'रित्यत्र वह्नेर्धूमव्यापकत्वं धूमाधिकरणवृत्त्यभावाप्रतियोगित्वमेव ।

तथा च व्याप्येत्यनेन तत्तद्वस्त्वधिकरणदेशवृत्तित्वावगमेऽपि तत्तद्वस्तु-सम्बन्धिसकलावयवसम्बन्धित्वं नावगम्यत इति तदर्थमन्तर्बहिःपदप्रयोग इत्युच्यते ; तदाऽपि जगति सर्वस्यापि वस्तुनो यत्किञ्चित्पदार्थाधारत्वान-पायेन व्याप्येत्यनेनैव सर्वपदार्थसम्बन्धावगमात् तत्पदद्वयस्यानुवादरूपतैव । किञ्चैतादृशव्यापकत्वविवक्षायां तत्र व्याप्यसमदेशवर्तित्वव्याप्याधिकदेशव-र्तित्वरूपभेदद्वयसद्भावेन तयोर्मध्ये व्याप्याधिकदेशवर्तित्वरूपव्यापकत्वमेव प्रकृते परमात्मनीति विस्पष्टयितुमेवान्तर्बहिःपदद्वयमिति वक्तुं शक्यतया तयोःपदयोर्भावदेशाभावदेशरूपार्थपरत्वमेवाऽऽचार्यपादोक्तं सिध्यतीति ना-न्तरवयवसाधकत्वसम्भवः । सर्वथाऽन्तर्बहिःपदयोरनुवादरूपत्वादनुवाद-स्य चैकदेशविषयकतयाऽप्युपपत्तेः , व्याप्यपदेनैव कात्स्न्र्येन सम्बन्धलाभेऽ न्तर्बहिरवच्छेदेन व्याप्येत्यन्वयासम्भवेन , तथा सति व्याप्यपदस्य सम्ब-ध्येत्येतावन्मात्रार्थकत्वे लक्षणाप्रसङ्गेन तावताऽपि सर्वप्रदेशसम्बन्धावगमनै-यत्याभावस्योक्तत्वेन च सर्वं व्याप्यान्तर्बहिश्च नारायणः स्थित इत्यन्वयस्यापि वक्तुं शक्यत्वात् तत्र तयोः पदयोः सम्भावितावयवकवस्तुगोचरतयैवोपप-त्तावुपात्तसर्ववस्तुसम्बन्ध्यवयवसाधकत्वासम्भवाच्च नाणुष्वन्तरवयवसिद्धिः ।

अपि च तत्सर्वमिति सर्वशब्देन रूपरसाद्यद्रव्यग्रहणमिष्यते न वा ? न चेत् , सर्वपदसङ्कोचप्रसङ्गः । इष्यते चेत् तेषु कथमन्तर्बहिरवयवस-मर्थनम् । कथं च तेषु व्याप्येत्युक्तसम्बन्धसम्पादनम् । अद्रव्येषु हि न साक्षात्परमात्मसम्बन्धोऽस्ति । न चाद्रव्यस्य दृश्यते श्रूयतेऽपि वेत्युक्तं दृश्यमानत्वं श्रूयमाणत्वं वा नास्ति , येन सर्वपदासङ्कोचः स्यात् । अथ तेषां द्रव्यापृथक्सिद्धतया पृथक्प्रतिपत्त्यभावात् प्रधानभूततदाधारमात्रग्रह-णमित्युच्यते तर्हि धर्मभूतज्ञानस्यापृथक्सिद्धस्याग्रहणप्रसङ्गः । तथा च तत्र परमात्मव्याप्तिर्न सिध्येत् । अथ व्याप्येति पदस्वरसावगतसाक्षात्स-

म्बन्धबाधात्तेषामग्रहणमिति मन्यते , तर्हि अन्तर्बहिरित्युक्तावयवशालित्वबाधात्तेषामन्येषां च निरवयवद्रव्याणामग्रहणमिति किं नोच्येत । इयमेव हि तदन्तरस्येति प्रकृतश्रुतौ रसाद्यग्रहणे गतिः । अथ रूपरसादिग्रहणेऽपि तत्र तदाधारद्रव्यगतावयवमन्तरादिपदेन गृहीत्वा कथमप्यर्थवर्णनमिष्टम् , तर्हि तथैवाणुष्वपि जीवेषु तदाधारदेहाद्यवयवग्रहणेन तत्कर्तुं शक्यमिति तुल्यमिति ।

नापि चतुर्थी; 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवे' त्येवंरूपाया अस्याः श्रुतेः श्रुतप्रकाशिकायां जिज्ञासाधिकरणेऽन्यथैव व्याख्यातत्वात् । इयमत्र सूक्तिः 'अनन्तरोऽन्तरङ्गव्यतिरिक्तः । अबाह्यो बहिरङ्गव्यतिरिक्तः । एवं व्यतिरेकनिर्देशेन निःशेषग्रहणं कृतम् । तदेवाह कृत्स्न इति । दार्ष्टान्तिकविषयोऽबाह्यशब्दो धर्मिपरः । अनन्तरशब्दो धर्मपरः । कृत्स्नशब्दस्तयोरेकदेशजडत्वव्युदासार्थः । अत्र सर्वत्रैकरूप्यमेव दृष्टान्तोपजीव्यम् । न त्वन्यत् । दृष्टान्तदार्ष्टान्तिकविषयवाक्यद्वयेऽप्यनन्तरोऽबाह्य इति ह्युक्त'मिति । अत्र ह्यात्मनः सैन्धवस्येव सावयवत्वाभावेन कथमन्तरङ्गबहिरङ्गवादसम्भव इति शङ्कायां दार्ष्टान्तिकस्य निरवयवत्वात् तत्र न तथाऽर्थः । अपि तु तस्य धर्मभूतज्ञानविशिष्टत्वात् तस्य च प्रसरणस्वाभाव्येन बाह्यत्वात् तथा बहिः प्रसरणरहितस्य चात्मनोऽन्तरत्वसम्भवादबाह्यानन्तरशब्दौ क्रमादात्मस्वरूपधर्मभूतज्ञानपराविल्युक्तम् । अथैवमपि कृत्स्नपदस्य सकलांशावच्छिन्नार्थकतयाऽवयवाभावे कथं तदुपपत्तिरिति शङ्कायां धर्मभूतधर्मिभूतज्ञानद्वयस्यात्र विवक्षिततयैकैकस्यापि तदेकदेशत्वसम्भवात् तदुपपत्तिरित्युक्तम् । अथ वानन्तराबाह्यपदाभ्यां धर्मधर्मिग्रहणे दृष्टान्त इव समस्तप्रदेशग्रहणे प्रमाणाभावादौपाधिकेऽपि क्वचिद्देशे जडत्वं

स्यादिति शङ्कायां कृत्स्नपदादेव तन्निवृत्तिरित्युक्तम् । अनन्तरं च, ननु यथा दृष्टान्ते धर्मिमात्रग्रहणेन तस्य रसघनत्वमुक्तम् , तद्वद्दार्ष्टान्तिकेऽपि धर्मिमात्रे प्रज्ञानघनत्वमेव वक्तव्यम् । तद्विहाय धर्मधर्म्युभयग्रहणे दृष्टान्तवैषम्यम् । न हि तत्र धर्मधर्म्युभयस्य रसघनत्वमस्तीत्याशङ्कापरिहाराय अत्रेत्यादि । अयमर्थः । यावानर्थो गृहीतस्तत्र सर्वत्रैकरूप्यमित्येतावत्यंशे दृष्टान्तः । यथा तत्र कृत्स्नस्य रसघनत्वं तथाऽत्र कृत्स्नस्य प्रज्ञानघनत्वमिति । न तु दृष्टान्तवदिहापि धर्मिमात्र एव प्रज्ञानघनत्वोक्तिरिति मन्तव्यम् । कुत एवम्, तदाह दृष्टान्तेति वाक्येन । अयं भावः—यदि धर्मिमात्रग्रहणमिष्टं स्यात् तदुभयत्राप्यनन्तरोऽबाह्य इति न निर्दिशेत् । न हि धर्मिमात्रग्रहणेऽनन्तराबाह्यपदयोरर्थौ वर्णयितुं शक्यते । तस्य निरवयवत्वेन बाहिरवयवान्तरवयवरूपार्थग्रहणासम्भवात् । न च दृष्टान्तवाक्यसारूप्यसम्पादनाय तत्पदद्वयं प्रयुक्तमिति वाच्यम् ; अर्थस्यानान्वितत्वात्सारूप्यरक्षणार्थमनन्वितार्थव्यवहारस्यायोगात् । सारूप्यरक्षणाभिप्राये च दार्ष्टान्तिकानुसारेण दृष्टान्तेऽपि तत्पदद्वयं न प्रयोक्तव्यम् । केवलं 'कृत्स्नो रसघन एव—कृत्स्नः प्रज्ञानघन एव' त्येतावदेव वक्तव्यम् । अतः,उभयत्र यतः पदद्वयमधिकमुक्तम् , अतस्तत्सार्थक्याय यथासम्भवं सैन्धवेऽवयवानां दार्ष्टान्तिके च धर्मधर्मिणोर्ग्रहणमिति ।

ननु धर्मिमात्रमेव दार्ष्टान्तिकेऽपि ग्राह्यम् । प्रज्ञानघन इत्यस्य रसघन इत्येतत्समाननिर्देशत्वेन तत्र रसगुणकत्वस्येव ज्ञानगुणकत्वस्यैव ग्राह्यतया ज्ञानस्वरूपत्वपरत्वासम्भवेन धर्मभूतज्ञानस्यापि ग्रहणे तत्र ज्ञानगुणकत्वस्य बाधात् । एवं चैकस्यैव धर्मिणोऽनन्तरोऽबाह्य इति निर्देशात् बाह्यावयवान्तरवयवसद्भावोऽपि श्रुतिबलात् स्वीक्रियतामिति चेत्—एतत्परिहारोऽप्यत्रैव श्रुतप्रकाशिकाग्रन्थेऽभिसंहितः । अयंभावः —धर्मिमात्रग्रहणेऽपि सावयवत्वं

न सेत्स्यति । अत्रोभयत्रानन्तरोऽबाह्य इति ह्युक्तम् । न पुनरन्तरो बाह्य इति । यदि तावदन्तरत्वं बाह्यत्वं चोक्तं स्यात् तर्ह्यवयवसद्भावः शंक्येतापि । अन्तरङ्गव्यतिरिक्तो बाहिरङ्गव्यतिरिक्त इत्येवोक्तत्वेनावयवस्यात्मनोऽन्तरङ्गबहिरङ्गाभावेन , एकस्य यस्यान्तरङ्गव्यतिरिक्तत्वम् तस्यैव बहिरङ्गव्यतिरिक्तत्वमपीति अर्थान्तरवदन्तर्बहिरङ्गात्मकत्वमात्मनो नास्तीत्येव प्रतीयते । अत एव दृष्टान्तस्य सावयवत्वेऽपि दार्ष्टान्तिकसारूप्याय तत्राप्यनन्तरोऽबाह्य इत्युक्तिः । अतो धर्मिमात्रग्रहणेऽपि सावयवत्वबाधस्यैव सिद्धतया नेष्टसिद्धिरिति । यद्यप्यस्य व्यासार्यग्रन्थस्यैवमर्थो भवेत् 'अत्र सर्वत्र ज्ञानस्वरूपत्वमेव दृष्टान्तोपजीव्यम् । न त्वेवकारबलेन गुणान्तरनिषेधोऽद्वैतिमतो ग्राह्यः । अनन्तरोऽबाह्य इत्युभयत्रोक्त्यैकदेशजडत्वशङ्काव्युदासार्थताया एवैवकारस्यावगमादिति । अथापि पूर्वोक्तार्थोऽपि सम्यक् सम्भवन्न परित्याज्य' इति । तथा चायं निष्कर्षः—आत्मनिरवयवत्वस्य प्रमाणान्तरसिद्धतया तस्यात्रावश्यवक्तव्यत्वाभावेनानन्तरोऽबाह्य इति पदद्वयेनाऽऽत्मनिर्देशस्यानतिप्रयोजनकतापत्त्या, बाह्यान्तरपदयोर्धर्मधर्मिज्ञानपरत्वस्यासम्भावितत्वाभावेन , उभयोः स्वयंप्रकाशत्वस्यैकेनैव वाक्येन सिद्ध्याऽर्थपौष्कल्यसद्भावेन च धर्मधर्म्युभयग्रहणेन ज्ञानस्वरूपत्वपरत्वं श्रुतेर्युक्तम् । दृष्टान्त इव धर्मिमात्रग्रहणाभावाद्रसघनपदस्येव प्रज्ञानघनपदस्य ज्ञानगुणकत्वरूपमर्थमस्वीकृत्य सैन्धवघन इत्यत्रेव प्रज्ञानस्वरूपत्वमात्रकथनाच्च सम्भवद्वैषम्यं सह्यम् । यदि तु तादृशवैषम्याभावाय धर्मिणो ज्ञानगुणकत्वमात्रे श्रुतितात्पर्यमिष्यते तर्ह्यनन्तरोऽबाह्य इति पदद्वयेनात्मनिर्देशस्य सैन्धववद्दृष्टान्तादिबलायत्तात्मसावयवत्वभ्रमनिवर्तनमेव परमं फलम् । प्रमाणान्तरप्रतिपन्नज्ञानस्वरूपत्वोक्तिवत् प्रमाणान्तरप्रतिपन्ननिरवयवत्वकथनपूर्वकं ज्ञातृत्वोक्तिश्च नैव न सङ्गच्छत इति ।

एवं च प्रदेशाभावादेव प्रादेशिकजडत्वशङ्का नकार्येति , ब्राह्माधिक-रणभाष्यरीत्याऽऽत्मज्ञानस्वरूपत्वपरत्वे वा, श्रीमद्यामुनाचार्यात्मसिद्धिग्रन्था-दिस्वारस्येन सार्वकालिकज्ञानगुणकत्वपरत्वे वा सर्वथाऽऽस्याः श्रुतेरात्मगता-न्तरवयवबहिरवयवपरत्वाभावस्य श्रुतप्रकाशिकासिद्धत्वात् स्वारस्याच्च नेयं श्रुतिस्तत्र प्रमाणं भवितुमर्हति । एवमत्र बाह्यान्तरपदव्याख्यानबला-दात्मविषयेऽन्तर्बहिरिति श्रवणं यत्र, तत्र सर्वत्र धर्मधर्मिग्रहणेनापि कश्चिन्नि-र्वाहश्श्रुतप्रकाशिकाऽभिमतो ज्ञायत इति न सावयवत्वे किञ्चिदपि प्रमा-णमित्यपि बोद्धव्यम् ।

न च पञ्चमी ; तत्राप्यन्तरपदस्यात्मनिरवयवत्वपर्यालोचनयाऽन्या-र्थकताया व्यासार्यवर्णितायाः प्रागेव दर्शितत्वात् । विवरिष्यते च समन-न्तरमेव । अङ्गीकृत्य पुनरन्तरपदस्यान्तरवयवपरत्वे स्वारस्यमादौ किञ्चि-दुच्यते । यद्यत्र स्वारस्यादन्तरपदस्यान्तरवयवे तात्पर्यम् तर्हि 'स चान-न्त्याय कल्पते' इति मुक्त्यवस्थायां जीवस्यानन्त्यश्रवणात्पूर्वमणुपरिमाणतया निर्दिष्टस्य पश्चादुच्यमानमिदमानन्त्यं विभुत्वरूपमेवेति कथं तद्विभुत्वं साक्षा-देव न स्वीक्रियते, केवलं धर्मभूतज्ञानद्वारेति कल्प्यते ? न चाणोर्विभुत्वं विरुद्धम् , कालभेदेनाविरोधात् । न चानादिभावस्याणुत्वस्य नाशायोगात् मुक्तावप्यणुत्वस्याङ्गीकर्तव्यतया विभुत्वाविवक्षा ; शब्दैकसमधिगम्ये वस्तुनि युक्तेरप्रसरात् । अन्यथा मुक्त्यवस्थायामेवोत्पद्यमानस्य धर्मभूतज्ञानविभु-त्वस्य नाशप्रसङ्गः , सादिभावस्य नाशावश्यम्भावात् । यदि पुनरन्यथाऽ प्यानन्त्योपपत्तौ न प्रागवगताणुत्वबाधनं युक्तमित्युच्यते तर्हि तद्वदेवात्मनो धर्मिग्राहकमानेन युक्तिभिश्च निरवयवत्वस्य सिद्धतया तथाविध आत्मनि पर-मात्मनोऽन्तर्यामिताबोधकप्रकृतवाक्यगतस्यान्तरपदस्यान्यथाऽप्युपपत्तौ न नि-रवयवत्वबाधनं युक्तम् । अथ तत्र प्रत्यगात्मन्यानन्त्यवद्बद्धावस्थायां देहपरि-

माणत्वमप्यवगम्यते । तथाङ्गुष्ठमात्रत्वमपि । यथा........'एकां शाखां जीवो जहाति अथ सा शुष्यति' इति श्रुतौ जीवस्य सर्वशाखाव्याप्तिदर्शनेन देहपरिमाणत्वम् , 'प्राणाधिपः सञ्चरति स्वकर्मभिरङ्गुष्ठमात्रो रवितुल्यरूपः' इति चाङ्गुष्ठमात्रत्वम् । न च तत्र मुख्यार्थस्वीकारः शक्यः, 'बालाग्र—भागो जीवस्स विज्ञेय' इति संसरणदशायां सर्वदाऽणुत्वस्यावगम्यमानत्वा-त् । अतस्तयोर्धर्मभूतज्ञानद्वारकत्वमङ्गुष्ठमात्रहृदयावच्छेदकृतत्वं चाभ्युपे-त्यम् । एवमणुत्वभिन्नपरिमाणस्य जीवविषयेऽन्यथानयनस्य दृष्टत्वात्तद्वदेवा ऽऽनन्त्यस्यापि नयनं युक्तमिति न साक्षाद्विभुत्वं स्वीक्रियत इति चेत्—तर्ही-हाप्यन्तर्यामिब्राह्मणे 'यो रूपे तिष्ठन्' 'यो रसे तिष्ठन्' 'यो वेदेषु तिष्ठन्' इत्यादिना रूपरसवेदादिष्वद्रव्येष्वपि परमात्मनोऽन्तरत्वस्योक्ततया तेषाम-द्रव्यत्वेन निरवयवतया तत्रान्यथानयनस्यैव कर्तव्यतया निरवयवेष्वन्यथान-यनमन्तरशब्दस्यैति निश्चिन्वद्भिरिहापि निरवयव आत्मनि सान्तरवयवत्वं स्वीकर्तुं न शक्यम् । अपि च यत्रान्तर्बहिःपदयोः समभिव्याहृतपदार्थग-तावयवपरत्वं तत्र घटस्यान्तर्बहिश्चेत्येवं षष्ठीनिर्देश एव दृष्टः । स एव च युज्यते । यत्र तु गृहाद्बहिरित्यादौ पञ्चमी तत्र न गृहगतावयवग्रह-णम् । अपि तु गृहाभावदेशग्रहणम् । अत्र चात्मनोऽन्तर इति पञ्च-मी न तु षष्ठी ; योऽप्सु तिष्ठन्नद्भ्योऽन्तर इत्यादिषु पर्यायेषु सर्वत्र पञ्च-म्या एव दर्शनात् । अतः पञ्चम्युपस्थापितोऽवधिरूपो योऽर्थस्तदविरोधे-नैवान्तरशब्दार्थो वक्तव्यः । अत एव व्यासार्यैः 'बहिरबहिस्थितिसाधार-ण्या' दित्युक्तम् । तथा चान्तरशब्दस्याबाहिरित्यर्थः । तत्र बहिष्ट्वांशे चावधिरूपार्थान्वयः । तच्च बहिष्ट्वं गृहाद्बहिरित्यादाविवाभावदेशत्वरू-पम् । तदन्यत्वं चाबहिष्ट्वं भावदेशत्वम् । तथा चात्मन्यसम्भवद-न्योन्यसमावेशमिथःसंश्लेषमूर्तद्रव्यदारुद्वयस्येवाभावदेशावच्छेदेन अशेषेऽपि

वस्तुन्याकाशस्येव भावदेशावच्छेदेन च परमात्मसम्बन्धोऽस्तीत्याचार्यपाद-सम्मतार्थ एवेदं श्रुत्यनुगुणः । वस्तुतस्त्विह पञ्चमीबलादन्तरपदं बहिर्यो-गार्थकम् । 'अन्तरं बहिर्योगोपसंव्यानयोः' इति हि स्मृतिः । तथा चा-त्मनोऽन्तर इत्यस्यात्मनो बहिर्वर्तमान इत्येवार्थः । व्यासार्यसूक्तेश्चायमर्थः—आत्मनि तिष्ठन्नित्यस्य बाहिरबाहिस्स्थितिसाधारण्यात् आत्मनोऽन्तर इति वा-क्यमात्मबाहिस्स्थितिं वदन्नात्मनि तिष्ठन्नित्यस्यात्मसद्भावदेशस्थित्यर्थकत्वव्युत्पा-दनेन परमात्मनस्तत्तद्वस्तुभावाभावदेशस्थितिं विशदयतीति । तस्मादेत-च्छ्रुतिप्रदर्शनेन तत्र तत्र जीवात्मन्यन्तःप्रदेशसद्भावस्थापनमत्यन्तानुपपन्नम् ।

अत एव सूत्रभाष्यश्रुतप्रकाशिका[illegible]दुक्तश्रुत्यानुगुण्यभङ्गप्र-सङ्गाच्च नान्यस्यामप्येवञ्जातीयकायां श्रुतौ सावयवत्वतात्पर्यं कल्पयितुं श-क्यमिति ।

अपि च यत्परतया श्रुतीनामीदृशीनां प्रवृत्तिस्तस्यैवार्थस्य भङ्गो न युक्तः ; न तु यत्रांशे न तात्पर्यं तस्यापि । न चेमा आत्मनोऽन्तरवयवबाहि-रवयवसद्भावं विधातुं प्रवृत्ताः । न हि 'यः पृथिव्यां तिष्ठन् पृथिव्या अ-न्तर' इत्यादेः पर्यायस्य प्रत्यक्षप्रमितपृथिव्यादिगतावयवविधायकत्वं दृष्टम् । अतो यावन्ति वस्तूनि प्रमाणसिद्धानि सावयवानि निरवयवानि वा तेषु स-र्वेषु कार्त्स्न्येन परमात्मसम्बन्धोऽस्ति । न कश्चित् प्रदेशोऽपि तादृशः, यः परमात्मसम्बन्धं नानुभवेदित्यत्रैव तात्पर्यम् । अन्यत्तु सर्वमनुवादरू-पम् । तस्माद्विवक्षितस्य शरीरशरीरिभावस्य कार्त्स्न्येन परमात्मसम्बन्धस्य वा निरवयवत्वसद्भावेऽपि सिद्ध्या न तत्परपुरोवादावगतनिरवयवत्वबाधनेना-तत्परानुवादगतसावयवत्वसमर्थनं युक्तम् । अतो यथा यस्य पर्णमयी जु-हूर्भवति न स पापं श्लोकं शृणोतीत्यत्र क्रत्वङ्गजुह्वर्थत्वेनावगतायाः पर्णता-या अपापश्लोकश्रवणार्थत्वे तात्पर्यासम्भवात् न स पापमित्यादेः प्राशस्त्य-

मात्रे तात्पर्येणार्थवादत्वम्, तथा प्रकृतेऽपि निरवयवत्वेनावगत आत्मन्यन्तरवयतात्पर्यसम्भवात् परमात्मासम्बन्धिप्रदेशाभाव एव वचनस्य तात्पर्येण व्याप्तिमात्रबोधकत्वमेव । एवं सर्वत्र पुरोवादानुरोधेनैवानुवादा नीयन्ते । यथा—सर्वाणि ह्वा इमानि भूतान्याकाशादेव समुत्पद्यन्त इत्यत्राऽऽकाशशब्दः पुरोवादिसद्विद्याकारणवाक्यावगतचेतनत्वाविरोधेन रूढिभङ्गेन नीयते । निरवयवत्वश्रुतिश्चात्र परमात्मव्याप्तिविधानायानूद्यमानस्यात्मनो ग्राहकप्रमाणप्रविष्टा सती पुरोवाद एवेति न तदर्थत्यागो युक्तः । यदि तावदन्तःपदप्रयोगमात्रेणान्तरवयवस्वीकार एवाऽऽग्रहः, तर्ह्यन्तः प्रविष्टः शास्ता जनानामिति प्रवेशवर्णनात्, यः पृथिवीमन्तरे सञ्चरन्, यश्चक्षुषि यो द्रष्टव्ये य आदित्ये यो नाड्यां यः प्राणे यो विज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्चरतीत्येवं सुबालोपनिषदि सञ्चारश्रवणाच्च तत्र तत्र प्रवेशसञ्चारयोरपि परमात्मनि महामीमांसकेन स्वीकर्तव्यं स्यात् । विभुत्वविरोधोऽपि कथञ्चिन्मर्षणीयः स्यात् । प्रवेशसञ्चारोपपत्तये सर्वत्र जीवादावन्तःप्रदेशे सविग्रहपरमात्मस्थितिरप्यूरीकार्या स्यात् । ततस्तदनुगुणमणुत्वमेवात्मनामेषितव्यं भविष्यति । अतस्तत्र तत्रेवात्रापि गतिः परिशीलनीया । वस्तुतोऽन्तः पदं न नियमतोऽन्तरवयवार्थकमित्यपि वक्ष्यते ।

तथा अन्यत्रापि तिरोधानानुपपत्तिप्रकरणे **श्रुतप्रकाशिकायाम्**, 'न च स्वरूपस्फुरणं भ्रमविरोधि । किं तु नित्यत्वाणुत्वनिरवयवत्वादीन्येव भ्रमविरोधीनि । तान्यागमगम्यानी'ति । एवं 'ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् । एकं सदेक'मिति श्रीविष्णुपुराणवचनव्याख्यानावसरे **भाष्यम्**, 'उपचयापचयानर्हतयैकं तत एव सदैकरूप'मिति । अत्र **श्रुतप्रकाशिका** च, 'एकमिति पदं व्याचष्ट उपचयेति । उपचयापचयौ वृद्धिक्षयौ । तदर्हत्वं सावयवत्वम् । सात्ययत्वाभावादेवैकशब्दवाच्यत्वम् ।

निरवयवत्वमेकत्वमित्यर्थः । तत एव सदैकरूपमिति । निरवयवत्वात्सावयवत्वप्रयुक्तवृद्धिक्षयरहितमित्यर्थ इति ।

अन्यच्च । यदि तावदन्तःशब्दो नानांशमध्यवचनः, तर्हि घटादौ बहिरेव विद्यमानस्योर्ध्वाधःपार्श्वावयवमध्यरूपस्याप्यवयवस्य तदर्थत्वापत्तिः । इष्टमेवेति चेत्, तर्हि निरवयवेऽपि प्रत्यगात्मनि त्रसरेणाविव दशदिक्सम्बन्धस्य प्रामाणिकतया प्रागवाङ्मध्यात्मकाग्नेयविदिगवच्छिन्नप्रदेशोर्ध्वाधोदिगवच्छिन्नप्रदेशादिष्वौपाधिकभागेषु कस्यचिदन्तःशब्दार्थत्वसंभवान्न पदार्थान्तरासम्बद्धपरमात्ममात्रसम्बद्धकिञ्चिदन्तरवयवप्रसिद्धिः । अथ यदि बहिःप्रदेशभिन्नप्रदेशवचनोऽन्तःशब्द इतीष्यते, तर्हि बहिष्ट्वमेवेदं किंरूपमिति विवेक्तव्यम् । स्वभिन्नपदार्थसम्बन्धिस्वप्रदेशो बहिःप्रदेश इति चेत्– तन्न। घटाद्यन्तरवयवेष्याकाशादिस्सम्बध्यमानत्वेन तस्यापि बहिःप्रदेशत्वापत्तेः । अथ स्वानधिकरणदेशावच्छिन्नपदार्थसंबन्धिस्वप्रदेशस्स्वबाहिःप्रदेश इति चेत् तर्हि अन्तर्बहिःशब्दयोः कुत्र शक्तिरुक्ता भवति । बहिःशब्दस्य स्वानधिकरणदेशावच्छिन्नपदार्थसम्बन्धिस्वप्रदेशे शक्तिः, अन्तःपदस्य तादृशस्वप्रदेशभिन्नस्वप्रदेशे शक्तिरिति चेत् तन्न। ईदृशगुरुतरार्थगोचरशक्तिकल्पनामपेक्ष्य बहिःशब्दस्य स्वानधिकरणदेशे शक्तिः, अन्तःपदस्य तद्भिन्नदेश इति लघ्वर्थशक्तिकल्पनस्यैव युक्तत्वात् । न च तावता व्यवहारानिर्वाहः ; सुखं निरूढत्वात् । तथा हि— घटस्य बहिरवयवे पिपीलिका संचरतीत्यत्र बहिःशब्दार्थो घटानधिकरणदेशः । तस्यावयवपदार्थे संयुक्तत्वमवच्छिन्नवस्तुसंयोगाश्रयत्वं वा सम्बन्धः । घटस्येति षष्ठ्या बहिःशब्दार्थानधिकरणेऽवयवे चान्वयः । तथा च घटानधिकरणदेशावच्छिन्नसंयोगशालिघटावयवे पिपीलिका संचरतीति विवक्षितार्थो लभ्यते । एवं घटान्तरवयवे चरतीत्यादौ घटानधिकरणदेशभिन्नदेशावच्छिन्नसंयोगशालिघटावयवे चरतीत्यर्थ-

लाभो बोध्यः । अत्र चानधिकरणदेशभिन्नदेश इति नान्तःशब्दार्थो गौरवात् । अपित्वधिकरणदेश इत्येव । तथा च भावदेशोऽभावदेश इत्याचार्यपादोक्तार्थयोरेवान्तर्बहिःशब्दशक्तिरिति क्व क्लेशनिर्वाहः । अवश्यं च बहिःशब्दस्यानधिकरणदेशमात्रार्थकत्वमूरीकर्तव्यम्, न पुनरनधिकरणदेशावच्छिन्नसंयोगवत्स्वप्रदेशार्थकत्वमेव । गृहाद्बहिर्गतो गोपाल इत्यादौ बहिःशब्दस्य गृहीयप्रदेशपरत्वाभावात्, गृहानधिकरणविपिनादिदेशपरत्वात् । अतोऽवश्याङ्गीकार्यलघ्वर्थशक्त्यैव सर्वनिर्वाहे न गुर्वर्थवाचित्वकल्पनं युक्तम् । एवं च यत्रानधिकरणदेशरूपबाहिःशब्दार्थस्य क्रियासबन्धविवक्षा, तत्र गृहादिभ्यएवमवधिसमर्पकपंचमीप्रयोगः । यत्र तु तस्य बहिःशब्दार्थस्यावयवाद्यन्वयविवक्षा तदर्थे च तद्वाचिशब्दप्रयोगः, तत्र तस्मिन्नवयवेऽवयविसंम्बन्धलाभाय पंचमीं विहाय षष्ठीप्रयोगः । यथा घटस्य बहिरवयवे पिपीलिकेति । सा तु षष्ठी सर्वसंबन्धोपस्थापनक्षमतयाऽवयवशब्देनेव बहिःशब्देनाप्यन्वेति । अत एव षष्ठ्याः सर्वत्र संभवादवयवान्वयाविवक्षया क्रियान्वयविवक्षया बहिःशब्दप्रयोगेऽपि अवधिवाचिनः प्रातिपदिकात् षष्ठ्यपि क्वचित् प्रयुज्यते । पंचमीप्रयोगे तु न बहिरवयवसंबन्धः क्वचिदपि लक्ष्यते । एवं च बहिःशब्दस्यानधिकरणदेशार्थकत्वात्तत्प्रतियोग्यर्थसमर्पकस्यान्तःशब्दस्याधिकरणदेशार्थकत्वमेव युक्तम् । एवं बहिःशब्दस्य स्वसमभिव्याहृतपदार्थीयप्रदेशशक्तत्वाभावादेव 'बहिरन्तश्च भूतानामचरं चरमेव च' (14-15) इत्यत्र श्रीमति गीताभाष्ये 'पृथिव्यादीनि भूतानि परित्यज्याशरीरो बहिर्वर्तत' इत्यभाषि । तथाचाचार्यपादाभिमतार्थ एव सिद्ध इति ।

यद्यपीदं विभाव्येत—अन्तःशब्दःसमभिव्याहृतपदार्थगतदशदिगवच्छिन्नतत्तत्प्रदेशसंबन्ध्येकप्रदेशपरः । यथा शम्यन्तर्बहिरित्यादौ । बहिःशब्दश्च तादृशैकप्रदेशानधिकरणदेशपरः । स च देशस्तत्पदार्थबाह्यावयव-

रूपोपि भवति, पदार्थान्तरदेशरूपोपि । यत्र गृहाद्बहिरित्येवं पंचमीप्रयोगः तत्र गृहस्य कृत्स्नस्यावधित्वेनान्वयात् गृहात्पदार्थान्तरदेश एव गृह्यते । यत्र तु षष्ठीप्रयोगस्तत्र यथासम्भवं पदार्थान्तरदेशो वा प्रकृतपदार्थबाह्यप्रदेश एव वा सर्व एव वा गृह्यते । ततश्च तदन्तरस्य सर्वस्येत्यादावन्तःशब्दस्य तत्तत्पदार्थीयदशादिगवच्छिन्नप्रदेशमध्यप्रदेशपरत्वात् प्रत्यगात्मनोऽपि तादृशप्रदेशस्स्वीकर्तव्य— इति ; अथापि प्रागुक्ताभिरुपपत्तिभिरन्तःशब्दघटितवचनानामन्यथासिद्धत्वात्, 'यमन्तस्समुद्रे कवयो वयन्ती'त्यत्रेदृशप्रदेशार्थकत्वं विना परितास्स्थितप्रदेशमध्यप्रदेशमात्रेष्यन्तःशब्दप्रयोगदर्शनात्, पटे भूमावास्तृते पटभूतलयोर्मध्ये च पिपीलिकाप्रवेशे पटान्तश्चरति पिपीलिकेति प्रयोगोपलम्भात्, यवनिकया पिहितमङ्गणं प्रविष्टे च नटे 'नटो यवनिकान्तःप्रविष्ट' इति प्रयोगात् तत्र तत्र तादृशप्रदेशपरत्वासम्भवेन पटयवनिकाद्यावृतदेशार्थकत्वस्यैवान्तःशब्दे स्वीकर्तव्यत्वात् तादृशार्थस्वीकारेणैवोपपत्तौ निरवयवत्वबाधायोगात्, 'य आत्मनि तिष्ठन्नात्मनोन्तर' इति श्रुतौ पंचमीप्रयोगेणात्मानधिकरणदेशतद्भिन्नदेशवृत्तित्वस्यैव विवक्षितत्वेन तदनुसारेण सर्वत्र तथा विवक्षाप्रतीतेः, तथा, 'तस्मिन्यदन्तस्तदन्वेष्टव्य'मिति श्रुतौ निरवयवे परमात्मन्यपहतपाप्मत्वादिकल्याणगुणकथनस्थलेऽन्तःशब्दस्य प्रयोगेण तत्र प्रागुक्तप्रदेशरूपार्थग्रहणासम्भवात् ग्रहणे परमात्मप्रदेशान्तरेष्वपहतपाप्मत्वाद्यभावप्रसङ्गाच्च कृत्स्नपरमात्मग्रहणस्यैव कर्तव्यतया तद्वदेवेहापि कृत्स्नतत्तद्वस्तुग्रहणोपपत्तेः बहिःशब्दस्य च तदनधिकरणदेशपरतया प्रयोगस्य संप्रतिपन्नतरत्वान्न कथमप्यात्मन्यन्तरवयवस्वीकारसंभवः ।

अथैवमसंदिग्धार्थकतत्परपुरोवादनिरवयवत्वश्रुतिबलेनान्यथासिद्धातत्परानुवादभूतान्तःशब्दघटितवचनानां वास्तवान्तरवयवसाधकत्वाभावेऽप्यौ-

पाधिकताहशप्रदेशपरत्वं कस्मान्न भवतीति चेत् उच्यते । काममस्तु, यदि संभवति । का नस्तत्र हानिरिति । निरूपणे चासम्भव एव निश्चीयते । जालकरन्ध्रनिविष्टरविकरनिकरकुहरनिरन्तरसञ्चरणनिरंशरजःकणनिरीक्षितनये-नात्यन्ताणुष्वप्यात्मसु प्रमाणबलेन दशदिक्संबन्धस्तावदसङ्कीर्ण एवाङ्गीकर्तुं शक्यते । न च निरवयवे कथं प्रादेशिकस्सम्बन्ध इति शङ्क्यम् ; न्याय-मते निरवयव एवाऽऽकाशे घटादिभिः प्रादेशिकसम्बन्धस्य स्वीकृतत्वात् । न च तत्रापि केनाप्यवच्छेदकान्तरेणाकाशोऽवच्छिद्यते । अथ तत्कल्पिते च प्रदेशे घटस्सम्बध्नातीति शङ्कितव्यम् ; तेनैवावच्छेदकान्तरेण कथमाकाशः प्रदेशेऽवच्छिन्न इति प्रश्नस्य जागरूकत्वात् । अतो वरं यः पदार्थस्सम्बध्नाति, तस्यैवावच्छेदकत्वस्य प्रदेशकल्पकत्वस्य स्वीकरणम् । तस्मात् परित ऊर्ध्व-मधश्च स्थिताभिर्विभिन्नाभिर्दिग्भिरात्माप्यवच्छिद्यत इति नूनं युक्तमिहापि प्रदेशकल्पनम् । यः पुनरन्यादृशोन्तरवयवः कल्प्यते स कस्य वस्तुनः सम्बन्धबलेन कल्पनीय इति विचार्यम् । न तावत्परमात्मातिरिक्तस्य ; तदपेक्षयाऽऽत्मनस्सूक्ष्मत्वेन तत्र तत्सम्बन्धायोगात्, नापि परमात्मनः ; तत्सम्बन्धस्य कृत्स्नेऽप्यात्मांशे विद्यमानत्वेन निरवच्छिन्नसम्बन्धशालितया तादृशान्तरवयवं प्रत्यवच्छेदकत्वासम्भवात् । न ह्यात्मबाह्यावयवासम्बद्धं तादृशान्तरवयवमात्रसंबद्धं किमपि वस्तु वक्तुं शक्यम् । न च वस्त्वन्त-रावच्छिन्नतया तत्प्रदेशवचनासंभवेऽपि दशदिगवच्छिन्नत्वाभाव एव तादृ-शमध्यप्रदेशावच्छेदक इति वाच्यम् । अस्यां दिश्ययं प्रदेश इतिवत् असि-न्नभावेऽयं प्रदेश इति व्यवहाराभावेनाभावस्यावच्छेदकत्वासंभवात् । अभा-वस्यापि भावान्तरत्वावश्यम्भावेन तदभावेऽभावस्यैव दुर्वचत्वाच्च । तस्मा-दौपाधिकान्तःप्रदेशस्य वक्तुमशक्यत्वादुक्तैव गमनिका ग्राह्येति ।

**श्रीमद्भट्टपराशरपादैश्च श्रीसहस्रनामभाष्ये** 'त्रसरेणुप्रमाणास्ते

रश्मिकोटिविभूषिता' इति जीवात्मनां त्रसरेणुरूपत्वमभाषि । **श्रीमद्यामुनमुनिभिश्च श्रीमदात्मसिद्धौ** 'वातायनविवरदृश्यमाननिर्भागत्रसरेणुव्यतिरेकेण परमाणुस्वीकारे कारणाभावा'दिति त्रसरेणोर्निरवयवत्वमेव न्यरूपि । **श्रीमद्भिर्लोकाचार्यैश्च तत्त्वत्रये** निरवयवत्वमवयवसमुदायरूपत्वाभाव एव चितः प्रावोचि । श्रीमन्तो **रम्यजामातृमुनयश्च** तद्व्याख्याने ज्ञानैकाकारतयाऽवयवसंघातात्मकत्वाभावमवादिषुः । तदर्थश्च तर्कनिरूपणावसरे व्यक्तीभविष्यति । एवं च सर्वथाऽवयवराहित्यमेवात्र संप्रतिपन्नम् । **श्रीबालसरस्वतीभिश्च मुमुक्षुप्पडि** व्याख्याने **तात्पर्यदीपिकायां** 'व्याप्यव्यापकयोर्जीवपरयोरुभयोरेव तेजोद्रव्यवत्स्वच्छत्वेन परस्परप्रतिघातकत्वाभावात्समानदेशत्वोपपत्तेर्नियन्तृनियाम्यभावस्य विनिगमकत्वात् श्रुतिसिद्धाऽन्तर्व्याप्तिरुपपद्यत' इति **दीपकृतः** प्रमाणीकृत्य, जीवानामन्तःप्रदेशो नास्तीति अन्तर्व्याप्तिश्च तदधिकरणदेशावस्थानरूपेति च यथाचार्यपादवर्णितं स्वस्वपूर्वादृतः पक्षस्सुस्पष्टं दर्शितः । तदेवं सर्वसंप्रदायसदाचार्यसमादृतं 'अप्रतिष्ठितकेवलकुतर्कमूलमेवे'ति निर्भयं ब्रवीति भवान्, स्वयं चानधीतप्रमाणामीमांसककल्पनीयं कमपि तर्कं प्रतिष्ठितं प्रमाणानुग्राहकं चाभिमन्यत इति, अहो ! अत्र भवतोऽभिनिवेशः ।

तर्काश्चात्मनामनवयवत्वप्रमाणमेवानुगृह्णन्ति । तथाहि——सावयवत्वं यदि स्यात्तर्हि घटादिवदेषामनित्यत्वं प्रसज्यते । न च श्रुतिरपवादिकेति शङ्क्यम् । सावयवत्वनिरवयवत्वयोर्द्वयोरपि श्रुतिप्रतिपन्नत्वाविशेषे कतरस्यादरो युक्त इति विचारे तर्कविरुद्धं परित्यज्य तदविरुद्धतदनुकूलार्थस्वीकारस्यैव कर्तव्यतेति तस्यानुग्राहकत्वसंभवात् । अत्र 'एकं सदैक' मिति श्रीविष्णुपुराणवचनमपि पूर्वं प्रादर्शि । वस्तुतश्श्रुत्योस्समबलत्वमेव नास्तीति च प्रागवोचाम । किञ्चात्मनः प्रत्यक्त्वानुकूलैकत्वविशिष्टतया

सर्वदा भानमिति संप्रतिपन्नम् । तदेवैकत्वमहामिति भान एकवचनेन प्रदर्श्यते । यदि तावदनेकात्मकस्स्यादात्मा तर्ह्यनेक इत्यपि भायात् । न हि कदाप्यनेकत्वाभाने सर्वदैवाबाधेन भातस्यैकत्वस्यानादरो युक्तः । अत एव नास्य घटादावेकत्वभानस्येव गौणैकत्वगोचरत्वकल्पनम्, प्रमाणाभावात् । न चावयवसमुदायजनितः कश्चिदवयव्यात्मेति युक्तम् । तर्हि स्वरूपेण जन्यत्वनाश्यत्वादिप्रसङ्गात् । अवयवातिरिक्तावयविस्वीकारस्यैव कुत्राप्यसम्भवाच्च ।

अपि चात्मनः प्रकाशकोऽयमहमिति प्रत्ययः किमवयवसंघातविषयकः उतैकैकावयवविषयकः ? नाद्यः, एकैकस्याप्यवयवस्यावयवसंघातविषयकप्रत्ययाधारत्वे तस्य प्रत्ययस्याहमित्याकारकत्वस्यैवासम्भवात् । योऽह्यहमिति धर्मी भासमानस्स प्रत्यगेव भवति, न पराक् । प्रत्यक्त्वं च स्वस्मै स्वयंप्रकाशमानत्वम् । आत्मान्तर्गताश्चावयवाः प्रत्येकं स्वमिवान्यानप्यात्मावयवान्यदि गृह्णन्ति तर्हि तेऽन्येऽवयवाः परस्मै प्रकाशन्त इति एकमवयवं प्रत्यन्ये परांच एवेति कथमहमिति प्रकाशमानत्वम् ? यद्येवं तेषां प्रकाशमानत्वम्, तर्ह्यहमिति प्रतीत्या प्रत्यक्त्वसमर्थनं भाष्यादिषु क्रियमाणं न जाघटीति व्यभिचारादिति प्रत्यक्त्वं न सिद्ध्येत् । यद्येवं स्वं प्रत्यञ्चमन्यांश्च पराचोवयवानेकोवयवो गृह्णीयात्, तर्हि वयमनेक इति नूनं प्रतीयात् ।

तथा घटमहं जानामीत्याद्यनुभवेष्ववयवभेदभिन्ना बह्व्यो ज्ञानेच्छाव्यक्तयो विषयतया स्वीकरणीयाः । न खलु घटादावुपलभ्यमानो रूपादिः प्रत्यवयवविश्रान्तिरहितः प्रत्यवयवविश्रान्तातिरिक्त एको वा भवति । न च यः केवलावयवमात्रेण नोत्पाद्यते, किं त्ववयवसंघातेन, स सर्वत्रावयवेष्वेक एव भवति, न प्रत्यवयवभिन्न इति वाच्यम्, अनुपलम्भात् । सुधापूगताम्बूल-

चर्वणसम्पादितसंघातसम्भवस्य रागस्य प्रत्यवयवमेव दर्शनात् । सकलाव-यवगतस्य च तत्र रक्तरूपस्यैकत्वे ताम्बूलचर्वणसंपृक्तद्विलदन्तरागनाशे सकलदन्तरागनाशापत्तिः । अनाशे तु धावितद्विलदन्तरागस्याप्युपलम्भापत्तिः । अतोऽवयवभेदेन गुणभेदस्यैवोपलम्भादिहापि तादृशप्रतीतिविषयज्ञानादेर्बहुत्वमेष्टव्यम् । न च यथा चर्विततताम्बूलगतरागोत्पादिका शक्तिस्त्रिष्वपि पदार्थेष्वेकैव स्वीक्रियते, तथा प्रकृतेऽपि ज्ञानगुणैकत्वमिति वाच्यम् । तत्रापि शक्तिभेदस्यैव स्वीकारात् । न च तेषां त्रयाणामप्येकशक्त्यवच्छिन्नत्वेन रागं प्रति कारणत्वस्य वक्तव्यतया न शक्तिभेद इति वाच्यम् । अचर्वणे शक्त्यभावेन पश्चादुत्पद्यमानांशं प्रति तेषां पृथक्कारणत्ववदेव रागं प्रत्यपि कारणत्वोपपत्तेः । न च शक्तिस्वीकारः किमर्थं इति वाच्यम् । शक्तिकल्पनात् पूर्वमेव त्रयाणां कारणत्वज्ञानावश्यम्भावेन कारणतावच्छेदकज्ञानस्यापि पूर्वमेवावश्यकतया शक्तेः कारणतावच्छेदकत्वासम्भवात् । तत्स्वीकारस्तु प्रमाणबलायत्त इति । अस्तु वा सा सर्वपदार्थसाधारणी यथाकथञ्चित् । इदं तु ज्ञानं रूपादिवद्विशेषगुण इति विशेषगुणत्वेन हेतुना बहुत्वं साध्यमानं न कथञ्चिद्बाध्येत । न च गुणस्य प्रत्यवयवभिन्नत्वेऽपि ज्ञानस्य द्रव्यत्वाभ्युपगमादवयवभेदेन भेदो न स्वीकार्य इति वाच्यम् । तथाऽपि तस्य प्रभास्थानीयत्वात् प्रभायाश्च दीपसम्बन्धितत्तदवयवभेदेन भेदस्यैव दृश्यमानतया सङ्घातवृत्त्येकप्रभाऽनङ्गीकारवदिहापि सर्वात्मावयवेष्वेकज्ञानानङ्गीकारस्यैव युक्तत्वात् । न खल्वप्रभाकाणामवयवानां कश्चित् सङ्घातः सप्रभाक इति युक्तम् । अतो न प्रत्येकमवयवस्य ज्ञानराहित्यं युक्तं वक्तुम् ।

नान्त्यः ; यद्येकैक एवावयवोऽहं जानामीत्यादौ भासते , तर्हि तस्यैवायं देह इत्यन्येऽवयवाः किं करिष्यन्ति ? न च सर्वेषामवयवानामयं देह

इति युक्तमभ्युपगन्तुम् । तथा सति हि कश्चिद्द्वेष्टि कश्चित् द्वेष्टि, कश्चित् प्रवर्तयति कश्चिन्निवर्तयति, कश्चित् तिष्ठासति कश्चिदुपविविक्षतीति बहुनायकस्येव राज्यस्य भूयिष्ठः क्षोभः स्यात् । अथ पाण्डवाः पाञ्चालीमिव केनापि समयेन प्रत्येकमवयवास्तनुमिमां भोक्ष्यन्त इति ; यद्येवम् , यस्मिन्नवसरे येनावयवेन यत् कर्म कृतं पुण्यं पापं वा तस्य फलं तेनैवानुभोक्तव्यमित्यन्येऽवयवा विषमविपच्यमाननिजकर्मवैचित्र्येण पृथक्फलं भोक्ष्यन्त इति कश्चिदवयवः स्वर्गमारोहेदन्यो नरकमियात् अपरश्च भुवं बम्भ्रम्येतेति कदाचिदवयवविभागोऽपि प्रसज्यते । यथाऽर्जुनस्तीर्थयात्रायामन्यासु वराङ्गनासु व्यापृतस्तद्वत् । तथा चैकस्मिन्नवयवे योगबलेन मुच्यमानेऽन्येऽवयवा अननुष्ठितोपाया अपवर्गमलभमानाः पृथग्भूय संसरेयुः । जडभरतस्य च महात्मनो मृगभावनापादितमृगभावस्यान्येऽवयवाः कान् देहाननलंकुर्वन्तीति विचार्यं स्यात् । एवं पाण्यवच्छिन्नात्मावयवस्पृष्टं पादावच्छिन्नात्मावयवः स्पृशन् , यदहं पाणिना पूर्वमस्प्राक्षम् , तदिदानीं पादेन स्पृशामीति न प्रतिसन्दध्यात् । न च सर्वेषामवयवानां पृथग्भूतानि धर्मभूतज्ञानानि युगपदेव कृत्स्नं शरीरं व्याप्नुवन्ति युगपत् सर्वेषामेकरूपामेव प्रवृत्तिं निवृत्तिमन्यद्वा जनयन्तीति सर्वमुपपद्यत इति वाच्यम् । तथा सति पार्थक्येनैव सर्वकार्यक्षमाणामेषामवयवानामीदृशः सङ्घात एव किमर्थं स्वीकार्य इति विचारणीयत्वात् । यद्येवं , अन्येऽपि जीवाः कदाचिदनेन जीवेन संहता एकं देहं युगपदधितिष्ठेयुः । न च तेषामेषां च किञ्चिद्वैलक्षण्यमस्ति , येनैतावद्भिरेवावयवभूतैर्भवितव्यम् ; नान्यैरिति नियम्येत । न च केचित् संहतिस्वभावाः केचित् पृथग्भावस्वभावा इति स्वैरं वक्तुं शक्यम् । तथा सति विभुत्वेनात्मानमभ्युपगम्य स देहान्तरुपलभ्यस्वभावो बहिरनुपलभ्यस्वभाव इति केषांचित् कल्पनस्यापि युक्तत्वप्रसङ्गात् । तथा

च गतम् 'नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथे'ति सूत्रेण । न चैषां प्रत्येकं भेदवत् समुदायरूपेणाभेदोऽप्यस्ति , तथाविधाभेदसद्भावाच्च कथमप्येकमेव ज्ञानेच्छादिकं स्वीक्रियते न पृथक्कार्यभाक्त्वमिति मन्त्रयितव्यम् । भगवद्भाष्यकारैर्भेदाभेदवादस्यातिपापीयस्त्वेनाभिहितस्यानुपपत्तिबहुलत्वेनावेक्षणासम्भवात् । अपि चैवमेते पृथक्पृथगहमिति स्वयंप्रकाशमानाः प्रत्येकमेवाहमर्थतामात्मतामनुभवन्तीत्यापन्नम् । अस्तु तावदिति चेत्—तथा सत्येकैकस्यैवाहंशब्दात्मशब्दादिवाच्यत्वस्य सिद्धतया 'ममान्तरात्मा तव च ये चान्ये देहिसंज्ञिताः' 'य आत्मनि तिष्ठन्नात्मनोऽन्तर' इत्यादौ सर्वत्र तत्तच्छब्दप्रतिपन्नेषु केवलमवयवेषु कथङ्कारमन्तर्वर्तित्वं परमात्मनः प्रतिपादयिष्यति भवान् ? तस्यापि किञ्चिदन्तरवयवाङ्गीकारादिति चेत्—तर्हि एतावदस्मदुक्तमेव भवता पुनः पुनः कर्णे कर्तव्यम् । अनवयवेऽपि तत्रान्तर्वर्तित्वमन्यथोपपादयाम इति चेत् हन्तैवमाचार्यपादक्षुण्ण एव पथि संप्रति प्रविष्टो भवानिति कृतमात्मनोऽवयवभेदकल्पनव्यसनेन । सर्वमिदमभिसन्धाय 'अन्तवन्त इमे देहा' इति गीतार्थं भाषमाणा भगवन्त एवाभाषिषत, 'न चानेकोपचयात्मक आत्मोपलभ्यते । सर्वत्र देहे अहमिदं जानामीति देहादन्यस्य प्रमातृतयैकरूपेणोपलब्धे'रिति । तस्मात् प्रत्यक्षबाधितार्थप्रत्यायिकानां 'आदित्यो यूप' इत्यादीनां श्रुतीनामिवान्तःपदघटितानां श्रुतीनामापातप्रतीतार्थग्रहणासम्भवात् अक्लेशेनैवान्यथोपपन्नत्वाच्च प्रत्यगात्मनो विभुत्वे वा देहपरिमाणत्वे वाऽङ्गुष्ठमात्रत्वे वा यथा प्रमाणमणुत्वे वा न सर्वथा सावयवत्वसम्भावनाप्रसक्तिरिति सुष्ठु प्रतिष्ठितमेषां निरवयवत्वमिति ।

यस्तु विभुद्रव्याणां कालादीनां देशपरिच्छेदराहितत्वेन कथं तद्बहिर्व्याप्तिः परमात्मन इति प्रश्नः, नैष भवतः सुकरः । भवन्मते बाहिःश-

ब्दस्य तत्तत्पदार्थीयबाह्यावयवपरतया विभुद्रव्येऽपि तथैव निर्वाहेण विभुद्रव्यानधिकरणदेशापेक्षाया एवाभावात् । वस्तुतत्त्वकथनाय कयाऽपि विधया प्रश्नः प्रवर्त्येत इति चेत् अस्तु तावत् । तदेव तत्त्वकथनं शोधयामः । यदादौ 'महतो महीया' निति श्रुत्या सर्वापेक्षया महत्तरत्वप्रतिपादनात् तदङ्गीकर्तव्यमिति ; तन्न; अस्याः श्रुतेः 'अणोरणीया'नित्येतत्प्रतिनिर्देशरूपतया तदर्थस्य च दुर्ग्रहाद्दुर्ग्रहतर इत्येवंरूपस्य प्रागुक्ततयाऽत्रापि तदानुगुण्यसम्पादनेन 'तद्दूरे तद्वन्तिके' इत्यत्रेव विषयासक्तचेतसां दुर्ग्रहात् दुर्ग्रहतरः न्यस्तचेतसां तु सुग्रहात् सुग्रहतर इति विशिष्टवाक्यार्थवर्णनसम्भवात् । वस्तुतस्तु यथा प्रत्यगात्मपरमात्मनोः सूक्ष्मत्वाविशेषेऽपि परमात्मगतं सूक्ष्मत्वं नियन्तृत्वसंवलितं निरुपाधिकं चेत्यतिशयितम् । तथा कालादिद्रव्याविशिष्टत्वेऽप्यस्य विभुत्वं तथैव तन्नियन्तृत्वसंवलितत्वान्निरुपाधिकत्वाच्चातिशयितमिति तावतैव महीयानिति व्यपदेशोऽणीयानितिवत् निर्वाह्य इति प्रागेवोक्तम् । किं चायं महत इति सामान्यशब्दो न विशिष्य विभुत्वेन सिद्धकालादिग्रहणाभावे निरवकाश इति नेयं श्रुतिरपेक्षितसाधनायालमिति । अत एव 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जग'दिति दशमाध्यायवचनोपन्यसनमप्युपेक्षणीयम् । किं च नेदमेकांशेनेति पदं भगवत्स्वरूपैकदेशं विग्रहैकदेशं वा वक्ति । किं तु पूर्वश्लोके 'तत्तदेवावगच्छ त्वं मम तेजोंशसम्भव' मित्यत्र तेजोंशसम्भवमिति पदेन नियमनशक्त्येकदेशसम्भवमित्यर्थस्योक्तत्वात् तदैकार्थ्याय नियमनशक्त्येकदेशमेव वक्ति । अत एव भगवता भाष्यकृता 'यथा मत्सङ्कल्पं नातिवर्तेत, तथा मम महिम्नोऽयुतायुतांशेन विष्टभ्याहमवस्थितः' इति भाषितम् । एवं 'मम तेजोंशसम्भव' मित्येतदभिन्नार्थकेन 'एकांशेन स्थितो जग' दित्यनेन समानार्थकत्वमभिसन्धाय 'यस्यायुतायुतांशांशे विश्वशक्तिरियं स्थिते' ति विष्णुपु-

रणवचनस्य भाष्यकृद्भिरत्रैव गीताभाष्य उदाहृतत्वेन तत्रापि नियमनशक्त्ये-कदेशार्थकत्वस्य स्पष्टतया न तस्यापि स्वाभिमतसाधकत्वसम्भवः ।

अपि च वचनयोरनयोः स्वरूपैकदेशपरत्वेऽपि 'इहैकस्थं जगत् कृत्स्नं पश्याद्य सचराचर' मितिवदेवोपपत्तेर्न विशिष्य विभुत्वेन निर्धारितव्यक्त्यपे-क्षयाऽपि विभुतरत्वसाधकता । यत्तु तस्यापि वचनस्य प्रकृतार्थसाधक-त्वेनोपादानम् , तदत्यन्तमयुक्तम् । तत्र किमेकस्थमिति पदस्यात्मस्वरू-पैकदेशपरत्वमभिसंहितम् , विग्रहैकदेशपरत्वं वा ? नाद्यः, 'मम देहे गु-डाकेशे' ति विग्रहस्य निर्दिष्टत्वात् । अन्त्येऽपि किं जगत्कृत्स्नमिति प्रा-कृतप्रपञ्चमात्रग्रहणम् उत नित्यविभूतिलीलाविभूत्युभयस्य ? नान्त्यः, यस्य देहस्यैकदेशे नित्यविभूतिरस्ति स देहः किमप्राकृत उत प्राकृताप्राकृतविलक्ष-णः ? नान्त्यः अपसिद्धान्तात् । नाद्यः, तस्यापि नित्यविभूत्यन्तर्गततया तस्य तदेकदेशवर्तित्वाभावे कथं कृत्स्नविभूतेस्तदेकदेशस्थत्वम् ? नित्यविभू-त्यन्तर्गतनित्यविग्रहपरिणामविशेषस्यैव चेदेकदेशावृत्तिता, कथं तर्हि नित्यवि-भूतिस्तत्र मास्यति । नच प्राकृतप्रपञ्चमात्रमिति पक्षः , तावता हि प्रकृत-वचनेन तदपेक्षया विभुत्वमेव सिद्ध्येत् न तु सर्वापेक्षयेति । अवश्यं चास्य वचनस्यैतावन्मात्रविषयत्वमेवाभ्युपेत्यम् । 'अमी हि त्वा सुरसङ्घा विशन्ति' 'रुद्रादित्या वसवो ये च साध्या' इत्येवं तदन्तर्गतमात्रस्य तत्र कीर्तनात् । अत एव 'तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधे'त्यत्र भा-ष्यम् 'अनेकधा प्रविभक्तं ब्रह्मादिविविधविचित्रदेवतिर्यङ्मनुष्यस्थावरादि-भोक्तृवर्गपृथिव्यन्तरिक्षस्वर्गपातालातलवितलादिभोगस्थानभोग्यभोगोपकरण-भेदभिन्नं प्रकृतिपुरुषात्मकं कृत्स्नं जगत्' इति । न ह्यत्र त्रिपाद्विभूति-विस्तारो व्युत्पादितः । 'द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेने'त्यत्रापि 'द्युशब्दः पृथिवीशब्दश्चोभावुपरितनानामधस्तनानां च लोकानां प्रदर्श-

नार्था' विति । 'नभस्स्पृशं दीप्तमनेकवर्णं' इत्यत्रापि 'नभश्शब्दः—प्रकृत्यतीतपरमव्योमवाची । सविकारस्य प्रकृतितत्त्वस्य पुरुषस्य च सर्वावस्थस्य कृत्स्नस्याश्रयतया नभस्स्पृशमिति वचना'दिति । यदि नित्यविभूतिमपि व्याप्य विग्रहोऽयमस्ति तर्हि स्पृशमिति तदेकप्रान्तमात्रसम्बन्धाभिधायिपदमपि न सङ्गच्छते । किञ्चेह नित्यविभूतिग्रहणेऽपि कृत्स्नजगदाधारभूतप्रकृतविग्रहापेक्षयाऽपि विभुत्वं परस्य कस्मात् प्रमाणादवगमिष्यते । वस्तुतः पुनरिह प्राकृतप्रतत्त्वमात्रकथनान्न सर्वापेक्षया विभुत्वमनेन वचनेनावगन्तुं शक्यमिति ।

किञ्च यदि कालादिषु विभुत्वव्यवहारः कतिपयमहाद्रव्यापेक्षया निकृष्टपरिमाणराहित्यमात्रेण न तु परमात्मतुल्यपरिमाणतयेति, तर्हि 'प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेद' इति सूत्रं विरुद्ध्यते । ब्रह्मस्वरूपस्य शिरःपक्षपुच्छादिरूपत्वाङ्गीकारे बाधकाभावात् । न च शिरआदिरूपत्वे शरीरस्येवानित्यत्वप्रसङ्गः, नित्यविग्रहादिवदुपपत्तेः । न च सत्यं ज्ञानमनन्तमिति श्रुतिविरोधः, देशकालापेक्षयाऽपि विभुत्वस्वीकारेण तदपरिच्छिन्नत्वाव्याघातात् । ब्रह्म स्वमध्यकायात्मकनिजस्वरूपैकदेशेन देशकालादिकमखिलमपि विभूतिवर्गमाक्रम्य ततो बहिःशिरःपक्षपुच्छात्मना समस्तीति स्वीकारे हि नानन्त्यश्रुतिविरोधप्रसक्तिः । न च शिरःपक्षादेर्लोके मिथःपरिमाणतारतम्यदर्शनाद्ब्रह्मण्यपि तथैवैकदेशस्थौल्यान्यप्रदेशकार्श्यादिप्रसक्तिरिति सूत्राभिमतो दोष इति वाच्यम् इष्टप्रसक्तेः । अस्थूलत्वादिश्रुतिस्त्वशरीरत्वादिश्रुतिवदेव निर्वाह्या । न च यत्र कार्श्यं तत्र कचिद्वस्तुनि ब्रह्मव्याप्त्यभावापत्तिरिति चोदनीयम् । सर्वस्मादपि वस्तुनो बहिरेव शिरःपक्षाद्यङ्गीकारात् तत्र वस्त्वन्तराभावेन तत्राव्याप्तेरप्रसक्तेः । ब्रह्मस्वरूपं तु बहिरेवं शिरःपक्षादिरूपं नित्यं चैव प्रमाणसिद्धमिति न किञ्चिद्धीयत इति ।

अतः कालादिकतिपयद्रव्यसमपरिमाणत्वस्यैव ब्रह्मणि सत्त्वाद्ब्रह्मवत्तेषामपि शिरःपक्षादिरूपत्वे प्रमाणाभावेन सर्वत्रैकरूपतया विभुत्वस्यैवाङ्गीकार्यतया ब्रह्मणि शिरःपक्षाद्यङ्गीकारे तदेकदेशे कार्श्यादिना ब्रह्मव्याप्त्यसम्भवादानन्त्यश्रुतिविरोध इति सूत्रतात्पर्यस्य वर्णनीयतया न ब्रह्मणो विभुतरत्वसिद्धिरिति न कालादिविभुत्वबोधकप्रमाणेषु लक्ष्यार्थग्रहणं युक्तम् ।

**यदपि** ब्रह्मतुल्यविभुद्रव्यविवेचनमारभ्योक्तम् 'नापि नित्यमुक्तधर्मभूतज्ञानानि तथा, तेषां सङ्कोचविकासशीलतया कदाचित् सङ्कोच्यावस्थापनस्यापि सम्भवेन तद्बहिःप्रदेशस्यापि सूपपादत्वा' दिति ; तदप्ययुक्तं विकल्पासहत्वात् । किमत्र धर्मभूतज्ञानस्य सङ्कोचो वस्तुतः कदाचिदस्त्येवेति कृत्वा बहिःप्रदेश उपपाद्यते, उत तस्य सङ्कोचयोग्यतामात्रमस्तीति ? नाद्यः, कदाचित् संकुचितत्वेऽप्यसङ्कोचावस्थायां तदपेक्षया विभुतरत्वासिद्धेः । न च तद्गतविभुत्वस्य कादाचित्कत्वात् परमात्मविभुत्वे सार्वकालिकत्वरूपातिशयोऽस्तीति महतो महीयानित्युपपद्यत इति वाच्यम् तथा सत्यधिकदेशवर्तित्वरूपबहिःप्रदेशवर्तित्वमादायातिशयोपपादनसंरम्भस्य त्यक्तत्वापत्तेः । नित्यगतधर्मभूतज्ञानस्य कदाचिदपि सङ्कोचाभावेनेदृशस्यापि वक्तुमशक्यत्वाच्च । नान्त्यः, तथासति जीवगतस्य ज्ञानस्य सङ्कोचयोग्यत्वं, परमात्मीयस्य तु न तत् । परमात्मनो हि स्वामित्वात् सर्वशक्तित्वाच्च जीवज्ञानं वस्तुतो विभ्वपि सङ्कोचयितुमस्ति सामर्थ्यमित्येवोक्तं भवतीत्यस्मदुक्तसोपाधिकत्वनिरुपाधिकत्वरूपवैषम्यमेव भङ्ग्यन्तरेणोपपाद्य महतो महीयानित्यस्य समर्थनं क्रियत इति बहिःप्रदेशोपपादनस्य चिकीर्षितस्यासिद्धिप्रसङ्गात् । तथा चास्मन्मतानुसरणान्नान्यादृशविभुतरत्वसिद्धिरिति ।

**यदपि** कालस्य जगदन्तर्गतकार्योपयोगितया सिद्धस्य जगदधिकदेशवर्तित्वस्यानपेक्षितत्वाज्जगतश्च गीतादिप्रामाण्येन परमात्मैकदेशवर्तित्वेन

परिच्छिन्नत्वान्न परमात्मतुल्यविभुत्वमिति ; तदप्यनुपपन्नम् । गीताद्युक्तस्य जगतो विभूत्येकदेशत्वस्य प्रागेव दर्शितत्वात्, विभूतिद्वयात्मनो जगतश्च परमात्मैकदेशवर्तित्वासम्भवस्य वक्ष्यमाणत्वात्तदुपयोगिनः कालस्य परमात्मतुल्यविभुत्वस्वीकारस्यावश्यकत्वात् । यदपि— कालो लीलाविभूतावनित्यः, नित्यविभूतौ नित्य इति कालभेदकल्पनम्, तदपि तथा नित्यत्वानित्यत्वविभाग एव प्रमाणाभावात्, 'गौरनाद्यन्तवती सा जनित्री'त्याद्यन्तरहितत्वेनावगतायास्स्वरूपोच्छेदरूपासाम्प्रदायिकध्वंसस्यासम्भवेन तत्र समविषमपरिणामौपयिकतया कालस्य नित्यत्वावश्यम्भावात्, उभयत्र च विभूतौ क्षणरूपेण कालपरिणामस्य तुल्यत्वात्, वैलक्षण्यस्य वक्तव्यत्वेऽपि ब्रह्मणीव श्रुतिमूलकतया प्रदेशभेदकल्पनयैवोपपत्तेः, 'अनादिर्भगवान्कालो नान्तोऽस्य द्विज विद्यते' 'रूपान्तरं तद्द्विज कालसंज्ञ'मित्यादिना कालनित्यत्वैकत्वावगमेन तद्विरुद्धकल्पनस्यायुक्तत्वात्, नैकस्मिन्नधिकरणे व्यासार्यैः अनेककालकल्पनमयुक्तमित्युक्तत्वात्, स्वाभीष्टब्रह्मविभुतरत्वसाधनमालाय धर्मिद्वयकल्पनस्यायुक्तत्वात्, एतत्कल्पनेऽपि धर्मभूतज्ञाने तादृशविभुतरत्वातिव्यापनस्यानपायाच्चोपेक्ष्यमेव ।

इदमत्र बोध्यम्—विभूत्योः परस्परदेशव्यावृत्तत्वेऽपि लीलाविभूतेरधः परिच्छेदाभावस्य नित्यविभूतेरूर्ध्वपरिच्छेदाभावस्य च प्रामाणिकत्वादेतदन्यतरानाक्रान्तब्रह्मप्रदेशाङ्गीकारासम्भवेन तयोरुभयोरपि विभूत्योः सर्वत्र परमात्मसङ्कल्पायत्तकार्योपयोगितया कालस्य स्वीकार्यतया न तस्य परमात्मापेक्षया न्यूनपरिमाणत्वं सुवचम् । एवं 'सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' इति श्रुत्या मुक्तस्य नित्यस्य च सार्वज्ञ्यस्य सम्प्रतिपन्नत्वेन कृत्स्नविभूतेस्तद्व्यापककालपरमात्मनोश्च ग्रहणाय धर्मभूतज्ञानसंयोगस्य सर्वप्रदेशावच्छेदेन स्वीकार्यतया ज्ञानस्य ब्रह्मतुल्यविभुत्वं दुरपह्नवम् । अ-

न्यथा सत्यत्वज्ञानत्वानन्तत्वज्ञानशक्तिबलैश्वर्याद्यनेकगुणविशिष्टपरिपूर्णब्रह्मानुभव एव जीवानां न स्यात् । किञ्चित्प्रदेशावच्छेदेन सत्यत्वादिषु धर्मभूतज्ञानासम्बन्धस्यापि भवन्मते वक्तव्यत्वात् । एवं सत्यत्वादयोऽपि गुणाः परमात्मनि कृत्स्नव्याप्तिं न लभेरन् । परमात्मतुल्यविभुत्वस्य कुत्राप्यनङ्गीकार्यत्वात् । न खलु महतो महीयानित्यत्र महत इत्यनेन द्रव्यस्यैव ग्रहणं न सत्यत्वादिरूपगुणस्येत्यत्र प्रमाणमस्ति । न हि नैयायिकैर्महत्त्वं परिमाणमिति तच्च द्रव्यमात्रगतमिति च गदितमिति तथैव स्वीकर्तव्यमिति निर्बन्धो युक्तः । न हि विभुत्वं सर्वमूर्तद्रव्यसंयोगित्वमिति तदुक्तं युक्तम् , तन्मत एव जातेरविभुत्वापत्तेः । सर्वत्र व्यापिनी गोत्वादिजातिरेकैव । न तु गोव्यक्तिभेदेन भिन्नेति तैरप्युक्तत्वात् । अतः सर्वप्रदेशावच्छेदेन वस्तुसम्बन्धित्वमेव विभुत्वं । तच्च परमात्मगते सत्यत्वादावप्यक्षतमेवेति तस्यापि महदादिशब्दग्राह्यत्वं भवत्येव । न च क्वचित् प्रदेशे सत्यत्वनिर्दोषत्वादेरनङ्गीकारो युक्तः । तथा सति 'अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवे'त्युक्तरीतिपरित्यागेन जडत्वसदोषत्वनिर्गुणत्वाद्यापत्तेः । स्वरूपनिरूपकधर्माभावे स्वरूपस्यैवासम्भवप्रसङ्गाच्च । एवं परमात्मतद्गतसत्यत्वादिप्रत्यक्षसिद्ध्यै तदीयधर्मभूतज्ञानस्यापि विभुतरत्वं स्वीकार्यमिति महतो महीयानित्यस्य सङ्कोच आवश्यक एव । तथा परमात्मन इव श्रियोऽपि विभुत्वस्य प्रमाणसम्प्रदायैरन्यत्राऽऽचार्यपादादिभिरकम्प्यं स्थापितत्वेन तदर्थेऽपि श्रुतिसङ्कोचोऽपरिहार्यः । तात्पर्यदीपिकायां च बहिर्व्याप्तिर्विभुव्यतिरिक्तापेक्षयेति व्यक्तमेवोक्तमिति भवत्सम्प्रदायविरुद्धमेव भवद्वचनम् । तस्मात् तदु सर्वस्य बाह्यत इत्येवंरूपाणि वचनानि श्रीकालधर्मभूतज्ञानरूपविभुवस्तुव्यतिरिक्तविषयाण्येव । सर्वथा परमात्मसम्बन्धरहित एकः प्रदेशोऽपि नास्तीति बोधन एव तत्परास्ताश्श्रुतय इति न ताभिः प्रमा-

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं न ततो विजुगुप्सते ॥ ६ ॥

---

**एवं सर्वस्य ब्रह्मात्मकत्वमुक्तम् । अथ तद्विदः सांप्रतिकं प्रयोजनमाह—यस्तु···· जुगुप्सत इति । ब्रह्मविन्माहात्म्ये विशेषद्योतनाय तुशब्दः । सर्वाणि भूतानि—ब्रह्मादिस्थावरान्तानि । अत्रात्मशब्दः सङ्कोचकाभावात् प्रकरणादर्थस्वभावाच्च सर्वान्तरात्मविषयः । पृथिव्यादिभिर्ध्रियमाणमपि तन्मुखेन परमात्मन्यवस्थितमित्येवकाराभिप्रायः । अनुपश्यति अनुस्यूतं विशदं निध्यायति । सर्वभूतेषु चा-**

---

णान्तरसिद्धपदार्थान्तरगताणुतमत्वमहत्तमत्वपरित्यागप्रसक्तिरिति 'अन्तः प्रविष्टः शास्ता जनाना' मित्याद्यनुरोधेन 'तदन्तरस्य सर्वस्ये'त्यस्यान्याद्दशान्तरवयवानङ्गीकारेणैत्राणत्रादिसर्ववस्तुविषयकत्वमुपरितनस्य च विभुव्यतिरिक्तविषयकत्वमित्या**चार्यपाद**भाषितमेव प्रमाणतर्कसर्वसत्सम्प्रदायसम्मतामिति कृतं बहुना ॥ ५ ॥

नन्वात्मशब्दो जीवात्मपरः स्यादित्यत्राह **अत्रेति** । आत्मशब्दः स्वपर्यायो न भवति, अन्तः प्रविश्य नियन्तरि तस्य मुख्यत्वादिति । **सङ्कोचकाभावादिति** । आप्लृ व्याप्ताविति धातुनिष्पन्नो ह्यात्मशब्दो विशेषशब्दाश्रवणात्सर्वव्याप्तिमेव स्वरसतो वक्तीति भावः । न च जीवातिरिक्तात्मनोऽप्रसिद्धतया न सर्वव्याप्तग्रहणसम्भव इति वाच्यम्, भूयिष्ठं श्रुतिषु सर्वान्तरात्मनः कस्यचिदुपदेशेनेहापि प्रथममन्त्रेणोपदिष्टत्वेनाप्रसिद्धत्वाभावात् । **प्रकरणात्** ईट्प्रकरणात् । **अर्थस्वभावाच्चेति** । सर्वाणि भूतानीति सर्वभूतनिर्देशाज्जीवस्य च सर्वभूतवर्तित्वासम्भवात्सर्वभूताधारतार्ह एव ग्राह्य इति । न चैकस्यैवात्मनो जीवस्य ब्रह्मादिसर्वशरीरवृत्तित्वाङ्गीकारात्तदुपपत्तिरिति वाच्यम् ; भूतशब्दस्य 'न हिंस्यात् सर्वा भूतानी'त्याद्यनुसारेणाचेतनविशिष्टचेतनपरत्वेन जीवाधारस्यान्यस्यैव वक्तव्यत्वात् । न

**स्मानमिति व्याप्तिमात्रपरम् । तस्य तैर्धार्यत्वाभावात् । स इति प्रतिनिर्देशोऽध्याहार्यः । ततो न विजुगुप्सते ब्रह्मात्मकत्वेनानुदृष्टेषु सर्वेषु स्वात्मविभूतिन्यायात् कुतश्चिदपि न विजुगुप्सते , कञ्चिदपि निन्दां न करोतीत्यर्थः ॥ ६ ॥**

---

यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।
तत्र को मोहः कश्शोक एकत्वमनुपश्यतः ॥ ७ ॥

**पुनरपि सर्वस्य ब्रह्मात्मकत्वं सामानाधिकरण्येन द्रढयति । तथानुदर्शनस्य सद्यः शोकनिवर्तकत्वमाह यस्मिन्- पश्यत इति । यस्मि-**

---

च्चात्मनीति सप्तम्यभेदार्थिका, अप्रसिद्धेः । एवं 'सर्वभूतात्मके तात जगन्नाथे जगन्मये । परमात्मनि गोविन्दे मित्रामित्रकथा कुतः' इत्युक्तरीत्याऽमित्रत्वादिप्रयुक्तमनोविकाररूपा हि निन्दा चेतनविषय एव सम्भवति । यद्यप्यचेतनस्याप्यनिष्टसाधनत्वमस्तीत्यनिष्टसाधनत्वज्ञानरूपा वा तदधीनमनोनिवृत्तिरूपा वा निन्दा तद्विषयेऽपि न न भवति ; अथाप्यचेतनस्य स्वातन्त्र्येणानिष्टसाधनत्वाभावाच्चेतन एव सा विश्राम्यति । अत एव चेतनपर्यन्तत्व एव स्वरसतो निन्दाप्रसक्तिमालोच्य वस्तुतः परमात्मात्मकमप्यचेतनप्रपञ्चं विहाय चेतनग्रहणाय **भूतानी**त्याह । अतस्तत इति तच्छब्दार्थको भूतशब्दश्चेतनपर्यन्तः । तस्मात् सर्वभूताधारतारूपार्थस्वभावादात्मशब्दः सर्वान्तरात्मविषय इति भावः । **पश्यती**ति दर्शनसमानाकारज्ञानविवक्षेत्याशयेनाह **विशदं निध्यायतीति** । **स्वात्मविभूतिन्यायादि**ति । यथा स्वभृत्यस्य स्वभृत्यान्तरेण प्रहारे स्वेन कार्यमाणे प्रहृतो भृत्यः प्रहर्तरि भृत्ये निन्दां न करोति तद्व्यापारस्य स्वाम्यायत्तत्वात् । तथा सर्वभूतव्यापारस्य परमात्मायत्तत्वावगमेन स्वयं तेष्वहितकारिष्वपि न निन्दां करोतीति भावः ॥ ६ ॥

**न् प्रणिधानसमये । विजानतः स्वतन्त्रपरतन्त्रवस्तुभेदं सम्यगुपदिष्टेन मार्गेण शास्त्रेण विविच्य जानतः । आत्मैव सर्वाणि भूतान्यभूत् परमात्मैव सर्वविशिष्टः प्रतीत इत्यर्थः । देवोऽहमित्यादिवत् लोकवेदमर्यादया शरीरात्मभावेन जगद्ब्रह्मसामानाधिकरण्ये सम्भवति बाधोपचारस्वरूपैक्यादिपक्षा बहिष्कार्याः । तत्र तदा को मोहः स्वतन्त्रात्मभ्रमादिलक्षणो मोहो न सम्भवतीत्यर्थः । कः शो-**

---

अभूदित्येकवचनानुसारेणात्मेत्यस्योद्देश्यवाचकत्वं युक्तमित्याशयेन विपरिवर्त्य पठाति **आत्मैव सर्वाणि भूतान्यभूदिति** । सर्वविशिष्टभावस्य सार्वकालिकत्वादाह **प्रतीत** इति । **स्वतन्त्रात्मभ्रमादिलक्षण** इति । **आदिना** राजभृत्यन्यायेन पृथक्सिद्धत्वभ्रमो गृह्यते । यत्तु मोह आत्मान्तरेषु स्वातन्त्र्येण स्वखेदजनकत्वानुसन्धानमिति ; तन्न ; विपरीतज्ञानस्य मोहशब्दार्थत्वादिह शरीरात्मभावादिनिबन्धनैकत्वविज्ञाननाश्यस्य विपरीतज्ञानस्य सर्वस्य मोहशब्दार्थत्वे सम्भवति खेदजनकत्वानुसन्धानमात्रस्य तत्त्ववर्णनायोगात् । 'अद्वेष्टा सर्वभूताना' मित्यत्र 'ईश्वरप्रेरितान्येतानि भूतानि द्विषन्त्यपकुर्वन्ति चे'ति गीताभाष्योक्तरीत्या आत्मनां परमात्मपारतन्त्र्येणापि खेदजनकत्वसद्भावेन खेदजनकत्वानुसन्धानांशे मोहत्वासम्भवेन स्वातन्त्र्यानुसन्धानांश एव तस्य वक्तव्यतया स्वतन्त्रात्मानुसन्धानं मोह इत्येव वक्तुमुचितत्वेन खेदजनकत्वमोदजनकत्वरूपविशेषविस्तरस्य व्यर्थत्वाच्च । यदपि शोकश्च परैः स्वपरिभवे कृते परदुःखजननप्रवृत्तिहेतुदुःखविशेष इति ; तदपि न ; शोकस्य परदुःखजननप्रवृत्तिहेतुत्वनियमाभावात् । दैववशाऽऽपतितपुत्रमरणादौ परदुःखप्रवृत्त्यनुपलम्भादसम्भवाच्च । अत इष्टवस्तुविश्लेषजनितं दुःखमेव शोकः । न चेह सर्वभूतेषु परमात्मात्मकत्वानुसन्धाननिवर्त्यत्वं दैवायत्तपुत्रमरणादिजनितशोकस्य कथमिति शंक्यम् । परकर्तृकपरिभवादिव्यापारे परमात्मायत्तत्वज्ञानस्य तद्दुःखजननप्रवृत्तिप्रतिबन्ध-

कः परविभूतिभूते सर्वस्मिन्निर्ममत्वसिद्ध्या पुत्रमरणराज्यहरणाद्या-वपि न कश्चिच्छोकः स्यादित्यर्थः । यथाह—

'अनन्तं बत मे वित्तं यस्य मे नास्ति किञ्चन ।
मिथिलायां प्रदीप्तायां न मे किंचित् प्रदह्यते ॥'

इति । एकत्वमनुपश्यतः सर्वविशिष्टैक्यमनुपश्यतः । न ह्ययमे-कशब्द एकव्यतिरिक्ताभावपरः। 'ईशावास्यमिदं सर्व'मितीश्वरव्याप्त-त्वेन प्रक्रान्तस्य कस्यचित्केनचिद्बाधायोगात् । सर्वभेदमिथ्यात्व-वेदनावेदनयोः कथंचिदपि तादृशैक्योपदेशादिप्रवृत्त्ययोगाच्च । न चासौ परस्परविरुद्धानां स्वरूपैक्यप्रतिपादकः, सर्वव्याघातोत्साद-ने स्वपरमतविवेकादिविप्लवप्रसङ्गात् । विशिष्टैकत्वविवक्षा तु सर्वप्र-माणानुगुण्यात् भाव्यते । ततोऽपि वरमत्र प्रकृतसामानाधिकर-ण्यनिर्वाहानुगुणसम्बन्धविवक्षा । प्रयुज्यते हि सम्बन्धविशेषविव-

---

कत्वेऽपि शोकनिवर्तकत्वाभावात् तत्रापि शोकनिवृत्तिः सर्वभूतेषु परमात्म-शरीरत्वानुसन्धानप्रयुक्तपरमात्मीयत्वविज्ञानापादितया स्वाभीष्टे स्वात्मनि पुत्रमित्रकलत्रादौ च, अहं मे, पुत्रादयश्च मे इत्येवंरूपस्वीयत्वबुद्धिनिवृत्त्यैव वाच्येति भवत्येव तादृशपुत्रमरणादिजनितशोकस्यापि ग्रहणमिति । इदं सर्वमिह 'परविभूतिभूते सर्वस्मिन्निर्ममत्वसिद्ध्या पुत्रमरणराज्यहरणादावपि न कश्चिच्छोकः स्या'दिति भाष्ये द्रष्टव्यम् । वेदनावेदनयोरिति सप्त-मी । वेदन उपदेशादिप्रवृत्त्ययोगः उपदेश्यपुरुषान्तराद्यभावात् । अवे-दने तदयोगश्च स्वयमज्ञत्वात् । भेदे सत्यप्यभेदमाचक्षाणानां भास्करादी-नां पक्षमाशंक्य परिहरति न चेति । विशिष्टैकत्वविवक्षात्विति रूप-रसगन्धादिविशेषितेऽपि पुरोवर्तिनि पनस इदमेकमिति व्यवहारगोचरं यदे-कत्वं तदिव सर्वभूतविशिष्टपरमात्मधर्मिगतं यदेकत्वं तद्विवक्षेत्यर्थः । सम्ब-न्धविशेषेति । एकविशिष्टान्तःपातित्वमेव विशेष्यविशेषणयोः परमात्म-जीवात्मनोः सम्बन्धविशेषः । अथ वा आत्मा भूतान्यभूदित्यत्र भूतानी-

क्षया रामसुग्रीवयोरैक्यमित्यादिष्वेकशब्दः । एतौ च श्लोकौ यद्यपि मुक्तविषयतया नेतुं शक्यौ, तथाऽपि पूर्वानुगुण्यान्मुमुक्षुप्रशंसार्थत्वमुचितम् । ततश्च वैशद्यातिशयविवक्षया शास्त्रजन्यज्ञानेन तन्मूलोपासनात्मकज्ञानेन वा दर्शनवाचोयुक्तिः । समाधिविशेषफलभूतस्त्वद्यतनसाक्षात्कार उपायत्वेनाभिहितत्वान्नात्र संशयनीयः मोक्षोपायोपदेशपरेषु सर्वेषु वाक्येषु दर्शनशब्द उपासनविषय इति शारीरकभाष्ये प्रत्यपादि ॥ ७ ॥

स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् ।
कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥

पुनरप्येनमीशेशितव्यतत्त्ववेदिनं वेदितव्यविशेषबोधनेन च विशिनष्टि । स पर्यगात् समाभ्य इति । सः सर्वभूतान्तरात्मभूतब्रह्मदर्शी पर्यगात् प्राप्नुयात् इत्यर्थः, ब्रह्मविदाप्नोति परमिति न्यायात् । समाधिलब्धेनानुभवेन प्राप्तवानिति सिद्धानुवादो वा 'अत्र ब्रह्म समश्नुते' इतिवत् । शुक्रम्, अवदातं प्रकाशरूपम् । अकायम् स-

---

ति विशेषणविभक्त्युपात्ताभेद एकत्वम् । भूतशब्दश्च विशिष्टपरः । विशिष्टाभेदश्च विशिष्टत्वमेव । तच्च शरीरशरीरिभाव एवेति स एवेहैकत्वं सम्बन्धविशेष इति । पश्यतीति शक्यार्थप्रत्यक्षग्रहणलोभप्रयुक्तां शङ्कामनुवदति एतौ चेति । अत्रोर्मिषट्के शोकमोहयोरेव वचनादशनायापिपासे जरामृत्यू च नैनं जहतीति प्रतीयमानतया योगिग्रहणमेव युक्तम् । तं हि ते न जहति । शोकमोहौ तु जहित इत्यर्थो यद्यपीत्यनेन व्यञ्जितः । पूर्वानुगुण्यादिति । 'न कर्म लिप्यते नर' इति मुमुक्षोरेव प्रशंसितत्वादिति भावः । अद्यतनसाक्षात्कारः परज्ञानाद्यात्मकः ॥ ७ ॥

लकारार्थाविवक्षायां दृष्टान्तमाह ब्रह्मविदिति । तद्विवक्षया योगजवैहिकानुभवपरतया योजयति समाधीति । शुक्रमित्यस्य निष्कलङ्क-

वैशरीरकमपि कर्मशरीररहितम् । अत एव अव्रणमस्नाविरं च । शुद्धम् अनाघ्राताज्ञानादिदोषं । अपापविद्धं अज्ञानादिकार्यकारणभूतपुण्यापुण्यरूपकर्मानालीढमित्यर्थः । 'न सुकृतं न दुष्कृत'मित्यारभ्य 'सर्वे पाप्मानोऽतो निवर्तन्ते' इति हि निगम्यते । एवमशेषहेयप्रत्यनीकः परमात्मा मुमुक्षोः प्राप्यः प्रापक उपास्यश्च स्यात् । स इत्युक्तं ब्रह्मविदं सर्वार्थदर्शित्वेन विशिनष्टि कविः क्रान्तदर्शी । व्यासादिवत् परतत्त्वतद्गुणबोधनानुगुणप्रबन्धनिर्मातेति वाऽर्थः । मनस ईशित्री बुद्धिर्मनीषा तद्वान् मनीषी, अभ्यासवैराग्याभ्यां निगृहीतान्तःकरण इत्यर्थः । परितो भवतीति परिभूः विद्यान्तरवतः सर्वानतिक्रम्य वर्तते कामक्रोधलोभादीन् दुर्जयानरातीनभिभवतीति वा । स्वयम्भूः अन्यनिरपेक्षसत्ताकः नित्यात्मस्वरूपदर्शीति यावत् । याथातथ्यतोऽर्थान् व्यदधात् परमपुरुषार्थतदुपायतद्विरोधिप्रभृतीन् सर्वान् पदार्थान् यथावद्विविच्य हृदयेन धृतवान् । शाश्वतीभ्यः समाभ्यः यावद्ब्रह्मप्राप्ति सर्वप्रत्यूहशमनार्थमिति भावः । यद्वा प्रथमान्तं च द्वितीयान्तं च पदजातं क्रमात् परावरात्मविषयतया व्याख्येयम् । तदा शुक्रमित्यादिकं सर्वोपाधिविनिर्मुक्तपरिशुद्धजीवपरम् । तमपि च सः परमात्मा पर्यगात् परितो व्याप्य स्थितः । कविरित्यादिकं सुगमम् । याथातथ्यत इत्यादि । अर्थान् कार्यपदार्थान् शाश्वतीभ्यः समाभ्यः यावद्विलयमवस्थातुं याथातथ्यतो व्यदधात् न पुनरैन्द्रजालिकवत् केवलं प्रकाशितवान् ॥ ८॥

---

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते य उ विद्यायां रताः ॥ ९ ॥

एवं विचित्रशक्तिपरमात्मविषयां कर्माङ्गिकां विद्यामुपदिश्यानन्तरं केवलकर्मावलम्बिनः केवलाविद्यावलाम्बिनश्च निन्दन् वर्णाश्रमधर्मानुगृहीतया विद्ययैव निःश्रेयसावाप्तिमाह अन्धं तमः प्रवि-

---

मित्यर्थवर्णनं तु शुद्धमित्यनेन पुनरुक्त्या त्याज्यम् ॥ ८ ॥

मन्त्रत्रयमवतारयति एवमिति ॥ ९ ॥

शन्ति येऽविद्यामुपासत इत्यादिना । ये भोगैश्वर्यप्रसक्ता अविद्यां कर्म ज्ञानविधुरकर्ममात्रम् । 'अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते' इति हि स्मर्यते । उपासते एकान्तमनसोऽनुतिष्ठन्तीत्यर्थः । अन्धं अतिगाढम् तमः अज्ञानम् त्रिवर्गाभिषङ्गान्नान्तरीयकं नरकं तमो वा । केवलकर्मनिरतानां दुःखानुवृत्तिमधीयते चाथर्वणिकाः

'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यू ते पुनरेवापियन्ति ॥'

इति । ततो भूय इव ते तमो य उ विद्यायां रताः । कर्ममात्रनिष्ठप्राप्यादन्धतमसादन्धं तमः स्वाधिकारोचितकर्मपरित्यागेन विद्यामात्रे रताः प्रविशन्ति । इवशब्दस्तमस इयत्ताया दुर्ग्रहत्वं द्योतयति । उकार उत्तरपदेनान्वेतव्यः विद्यायामेव रता इति ॥ ९ ॥

---

अन्यदेवाहुर्विद्ययाऽन्यदाहुरविद्यया ।
इति शुश्रुम धीराणां ये नस्तद्व्याचचक्षिरे ॥ १० ॥

किं तर्हि मोक्षसाधनमित्यत्राह अन्यदेवाहुर्विद्ययाऽन्यदाहुरविद्ययेति । अत्र व्यत्ययानुशासनात्पञ्चम्यर्थे तृतीया, अन्यशब्दान्वयात् । अन्यदेवाहुः सम्भवादिति वक्ष्यमाणसारूप्याच्च । केव-

---

पञ्चम्यर्थ इति । अन्यशब्दार्थैकदेशभेदान्वययोग्ये प्रतियोगित्वरूपे पञ्चम्यर्थ इत्यर्थः । वक्ष्यमाणसारूप्याच्चेति । यत्त्वत्र सारूप्यरक्षणाय न व्यत्ययानुशासनमाश्रयितव्यम् । हेतौ तृतीयापञ्चम्योरुभयोरनुशासितत्वेन हेत्वर्थग्रहणेनैव सारूप्यरक्षणसम्भवात् । मुमुक्षोश्च विद्याविद्ययोरङ्गाङ्गिभावेनानुष्ठानस्यैव स्थापनीयतया तयोः पृथक्पृथगनुष्ठानेनौचित्यं पूर्वमन्त्रेणैकप्रकारेण वर्णितम् । सम्प्रति तयोः फलभेदप्रदर्शनरूपप्रकारान्तरेणापि तदनौचित्यमनुवर्ण्यते । तथा चायमर्थः 'विद्यया परविद्यया अविद्याजन्यफलादन्यदेव फलमाहुः । अविद्यया कर्मणा विद्याजन्यफलादन्यदेवा-

**लकर्मणः कर्मनिरपेक्षविद्यातश्चान्यन्मोक्षसाधनमित्युक्तं भवति। आहुः पूर्वाचार्या इति शेषः। औचित्यादुपनिषद इति वा। पूर्वपूर्व-**

---

हुः । धीराणामिति वचनमश्रौष्म । ये धीराः तत् तयोः फलभेदविषयं वचनमस्मभ्यं व्याचचक्षिर इति । तन्न । एवञ्जातीयस्यार्थस्य शङ्करभाष्य एवोक्तत्वादत्रानुपपत्तिपरामर्शेनैवाचार्यपादैरस्यार्थस्योपेक्षितत्वात् ।

अनुपपन्नता चास्यैवम्—यद्यपि हेतौ तृतीयापञ्चम्यौ स्तः । अथापि ससम्बन्धिकस्थलेऽपेक्षितसम्बन्धप्रत्यायकत्वमेव विभक्तेः स्वरसम् । न हि चैत्रस्य गुरुरित्यादौ चैत्रस्य कयाऽपि विधया गुरौ धर्मिण्यन्वयमङ्गीकृत्य चैत्रातिरिक्तकिञ्चिन्निरूपितगुरुत्वविवक्षा क्रियते । नो खलु घटादन्य इत्युक्ते सत्यां चान्यत्वप्रतियोग्याकांक्षायां प्रतियोगिसमर्पकत्वं विहाय जनकसमर्पकत्वं घटादित्यस्य स्वीक्रियते । अन्यशब्दार्थोपस्थित्यनन्तरं तस्य किं जनकमित्यपेक्षामत्यन्तानियतामपेक्ष्यान्यशब्दार्थविशेषणतयोपस्थितस्यान्यत्वस्य प्रतियोगि किमित्यपेक्षाया एव नियतशीघ्रभावित्वेन तच्छामकत्वस्यैव तत्पदे स्वीकर्तव्यत्वात् । अतोऽन्यदेवाहुः सम्भवादित्यत्रावधिपञ्चमोस्वीकार एव स्वरसः । एवं प्रकृतमन्त्रेऽपि माध्यन्दिनपाठे विद्याऽविद्यापदोत्तरं पञ्चम्या एव श्रवणात् तत्रापि स्वरसोऽवधिरूपार्थो ग्राह्यः । अतः सम्भवादिति काण्वमाध्यन्दिनपाठयोः प्रकृतमन्त्रे च माध्यन्दिनपाठे त्रिषु स्थलेष्वस्वरसार्थकल्पनमपेक्ष्यैकत्र तृतीयाव्यत्ययानुशासनाङ्गीकार एव युक्तः ।

किञ्चास्य फलभेदप्रतिपादकत्वमयुक्तम् । केवलविद्यायाः केवलाऽविद्यायाश्च फलभेदस्य तत्तदन्धतमसप्रवेशरूपस्य प्रागेवोक्तत्वात् । समुच्चित्यानुष्ठीयमानयोस्तयोस्तस्मिन् प्रयोगे यः फलभेदस्तत्प्रतिपादकोऽयमिति चेन्न। नैष्फल्यात् । समुच्चित्यानुष्ठानेऽवधारिते , समप्राधान्ये दर्शपूर्णमासाभ्यां यजेत स्वर्गकाम इत्यादिषु बहूनामपि समुच्चयदर्शनात्तथैव फलसाधनत्वमवगमिष्यते । अङ्गाङ्गिभावे च दर्शे प्रयाजादेरिव कर्मणोऽप्युपकारात्मकं फलं

र्मस्यैव विद्यायाः प्रधानफलं च भोत्स्यत इति फलैक्ये फलभेदे वा सर्वथा समुच्चयस्यासम्भाविलत्वाभावेन फलभेदकथनस्यानावश्यकत्वात् । उत्तरमन्त्रे फलभेदस्य विशेषरूपेणैव कथ्यमानत्वेनेह सामान्यरूपेण तत्कथनस्यानपेक्षितत्वात् । उत्तरमन्त्रो विद्याऽविद्यासमुच्चयविधानार्थः । फलभेदस्त्विहोक्त एव विशेषरूपेणानूद्यत इति चेन्न । सामान्यरूपेणोक्तस्य विशेषरूपेणानुवादासम्भवात् । समप्राधान्याङ्गाङ्गिभावान्यतरनिष्कर्षाय फलविशेषप्रतिपत्तये तत्र विधानस्यैव युक्तत्वात् । पूर्वार्धे यच्छब्दोपबन्धेन निन्दाबलाच्च समुच्चयस्यानूद्यमानत्वावगमेन फलभेदस्यैव विधेयत्वाच्च । अतोऽस्य फलभेदपरत्वाभावात् मोक्षसाधनपरत्वमेव युक्तं स्वीकर्तुम् ।

एवं कर्ममात्रानुष्ठाने विद्यामात्रानुष्ठाने चानिष्टे कथिते किञ्चित्समुच्चितस्य कर्मणः किञ्चित् समुच्चितायाश्च विद्याया अनुष्ठेयत्वावगतौ समुच्चयापेक्षायामनुपस्थितपदार्थान्तरकल्पनामपेक्ष्य समभिव्याहारमहिम्ना विद्याकर्मणोरेवोपस्थितयोः परस्परसमुच्चये प्रतीयमाने भवतीयमाशङ्का—काम्यानि हि कर्माणि त्रिवर्गं फलन्ति पुंसः संसृतौ श्रामयन्तीत्यन्धतमःप्रवेशकान्युच्यन्ते । तानि कथं विद्यया समुच्चित्यानुष्ठीयमानानि तथा न भविष्यन्ति । प्रत्युत विद्याविद्योभयसाध्यमुभयमपि तमः प्रविशेदनुष्ठाता । तथा विद्यया सह कर्म न शक्यमनुष्ठातुम् । विद्यां प्रति कर्म विरुद्धमिति लोके वर्णयन्ति । अतः समुच्चयेनापि नैनयोर्मोक्षसाधनत्वमिति किं तर्हि मोक्षसाधनमिति । अस्यामाशङ्कायामुच्यते—केवलाऽविद्या यादृग्रूपा ततः, केवला च कर्मविरोधिनी तन्निरपेक्षा या विद्या ततश्चान्यदेव (फलाभिसन्धिरहितकर्मपरिकर्मितं तदत्यन्तापेक्षं विद्यारूपम्) मोक्षसाधनमिति । अनन्तरे मन्त्रे च कर्मणो मृत्युतरणरूपफलान्तरोपदेशेन त्रिवर्गानाधायित्वस्य विद्याप्रतिबन्धकविधूननत्वकथनेन विद्याविरुद्धत्वाभावस्य प्रत्युत तदपेक्षितत्वस्यैव च व्यु-

त्पादनात् फलाभिसन्धिरहितकर्मपरिकर्मिता तदत्यन्तापेक्षा विद्यैव मोक्षसाधनमित्युक्तं भवति । तस्मादवश्यपरिहरणीयैवंविधशङ्कापरिहारकत्वे सम्भवति नानपेक्षितान्यथासिद्धफलभेदप्रतिपादकत्वमस्य मन्त्रस्य युक्तम् । सर्वमिदमवहितमनसामिहोत्तरत्र च मन्त्रे 'केवलकर्मण कर्मनिरपेक्षविद्यातश्च' 'परस्परविरोधप्रसङ्गरहित' मित्यादिभाष्यस्थपदलभ्य शक्यं ज्ञातुम् ।

अपि च न भवदभिमतार्थो मन्त्रेण प्रतिपादयितुं शक्येत । अन्यदेवाहुर्विद्ययेत्यत्राहुरित्युक्ते वचने किमन्यदित्यर्थोद्देशेन विद्ययेत्येतदर्थो विधीयते उत वैपरीत्यम् । नाद्य , अस्य मन्त्रस्य फलभेदज्ञापनपरत्वस्य भवदुक्तत्वेनान्यत्वस्य विधेयतया तन्योद्देश्यत्वासम्भवात् । अत एव हि पाठक्रममुल्लङ्घ्योद्देश्यवचनं पूर्वं विधेयस्य ततः परमिति न्यायमनुसृत्य विद्ययेति पदं प्रथमतो भवता व्याख्यातम् , पश्चादन्यदिति । किञ्च विद्ययेत्यस्य विद्याजन्यत्वमित्यर्थः । तस्य न तावदन्यदित्यर्थेनान्वयः । तथा सत्युद्देश्यभूतान्यशब्दार्थविशेषणत्वेन विधेयत्वासम्भवात् । उद्देश्याविधेययो परस्परान्वयं विना प्रथमतः क्रियान्वयस्यावश्यकत्वात् । नाप्याहुरित्युक्तवचनेनान्वय । वचनस्य विद्याजन्यत्वाश्रयत्वाभावात् । न च बोधानुकूलशब्दप्रयोगरूपवचनैकदेशे बोधेऽन्यशब्दार्थस्य विशेष्यतयाऽन्वयाद्विद्याजन्यत्वस्य विद्ययेत्युक्तस्य तत्र प्रकारतयाऽन्वय इति वाच्यम् । हेतौ तृतीयाया हेतुमद्वाचकपदेनैवान्वयस्य वक्तव्यत्वात् । यथा हि कारकाणां क्रियैवान्वय. तथोपपदविभक्त्यर्थस्योपपदार्थ एव प्रतिसम्बन्धिन्यन्वयो दृष्ट । यथा हेतुत्वस्य हेतुमति प्रतियोगित्वस्यानुयोगिनीत्येवम् । अन्यथा घटविशेष्यकदण्डजन्यत्वप्रकारकज्ञानविवक्षया घटो दण्डात् ज्ञायत इति प्रयोगस्य घटवृत्तिभेदविशेष्यकपटप्रतियोगिकत्वप्रकारकज्ञानादिविवक्षया घटवृत्तिभेद पटात् ज्ञायत इत्यादेश्चापत्ते । अतो विद्यया सम्भवादित्याद्यर्थस्याहुरित्येतदर्थैकदेशे

प्रकारतयाऽन्वयासम्भवादन्यशब्दार्थ एवान्वयो वक्तव्यः । स च न सम्भवतीत्युक्तम् । यदि पुनरन्यत्फलं विद्ययेत्याहुरित्युच्येत तर्हीतिशब्दाध्याहारप्रसङ्गः । ननु भवन्मतेऽपि विद्ययाऽन्यदित्युभयोरपि विधेयसमर्पकत्वेन मोक्षसाधनं विद्याभिन्नमाहुरित्यर्थस्यैव वाच्यत्वेन मोक्षसाधनपदाध्याहारोऽस्तीति चेत् भवन्मतेऽप्यन्यशब्दार्थस्य प्रतियोग्याकांक्षाशान्तये अविद्याजन्यफलादिति प्रतियोगिवाचकपदाध्याहारोऽपि कश्चिदस्त्येव । विद्याफलमन्यदाहुः अविद्याफलं चान्यदाहुरित्युक्ते समभिव्याहारमाहिम्ना तादृशप्रतियोगिसिद्धिरिति चेत् अस्माकमपि मोक्षसाधनं ये प्रोक्तवन्तस्तेभ्यो विद्यातोऽविद्यातश्च पृथग्भूतमाहुरिति श्रुतमित्युक्ते समभिव्याहारमाहिम्नैव मोक्षसाधनरूपोद्देश्यसिद्धिः । इयांस्तु विशेषः । भवताऽन्यदिति पदस्य समभिव्याहारलभ्यप्रतियोगिविशेषभिन्ने लक्षणा स्वीक्रियेत । अस्माभिरन्तिमपादस्थस्य तदित्यस्य प्रागप्यपकर्षः क्रियत इति । अत इतीत्यध्याहारः कश्चिदधिक एव । आख्यातं विना वाक्यसमाप्त्यभावात् अन्यद्विद्यया भवतीत्याहुरिति भवत्यध्याहारोऽपि कश्चिद्भवति । नान्त्यः, विद्ययेत्यस्य विद्याजन्यत्वमित्येतावन्मात्रबोधकत्वेन विद्याजन्यफलमिति धर्मिपर्यन्तार्थालाभेन विद्याजन्यमविद्याजन्यभिन्नमिति विवक्षितार्थस्य दुर्वचत्वात् । उपपदविभक्त्यर्थस्योपपदार्थ एवान्वयस्य वक्तव्यत्वेन तद्भिन्नक्रियान्वयस्यासम्भवेन विद्येत्यस्योद्देश्यत्वासम्भवाच्च । यदि तु फलमित्यध्याहृत्य विद्यया फलमन्यदाहुरित्यर्थ उच्यते तर्ह्यध्याहार एव दोषः । अथ चेदित्थं मन्यते—तुरीयपादगततच्छब्दार्थः फलम् विद्ययाऽन्यदित्यस्य विद्यासाध्यभिन्नमित्यर्थः । एवं चाविद्याफलं विद्यासाध्यभिन्नमित्यर्थलाभ इति ; तदपि न युक्तम् । तदित्यस्याविद्याफलं विद्याफलमिति हि विशिष्यार्थद्वयपरत्वमाश्रयितव्यम् । विद्ययाऽन्यदित्यस्य विद्यासाध्यभिन्नमित्यर्थश्च न सम्भवति । अत एव 'त्वया-

**संप्रदायसिद्धोऽस्माकमर्थ इत्याह— इति शुश्रुम धीराणां ये नस्तद्व्याचचक्षिरे । ये पूर्वाचार्याः नः प्रणिपातादिभिः सम्यगुपसन्नानामस्माकम् । तत् मोक्षसाधनम् । व्याचचक्षिरे विविच्योपादिक्षन् ।**

---

णामपि चैवमुपन्यासः प्रश्नश्चे'ति सूत्रश्रुतप्रकाशिकायां अन्यत्र धर्मादित्युक्ते धर्मसाध्यभिन्न इत्यर्थो न लभ्यत इत्युक्तम् ।

यदपि तच्छब्दस्य फलभेदविषयं वचनमित्यर्थवर्णनं तदप्ययुक्तम् । व्याचचक्षिर इत्युक्तवचनस्यार्थकर्मकत्वस्यैव मुख्यतया शब्दकर्मकत्वकथनस्य हेयत्वात् । किं च ये फलभेदविषयं वचनमवोचन् तेभ्यः फलं भिन्नं ब्रुवन्तीति श्रुतमित्युक्तौ स्वारस्यमपि हीयते । तथा भवदभिमतासिद्धिश्च । अयं मन्त्रः फलभेदप्रतिपादनार्थ इति हि भवदभिमतम् । सम्यक् परामर्शे च फलभेदवचनमुपदिष्टवद्भ्यः फलं भिन्नमाहुरिति श्रुतमित्यर्थवर्णने प्रमाणान्तरप्राप्तस्य फलभेदस्य सांप्रदायिकत्वमात्रतत्परतैवावगम्यत इति । अत एव तच्छब्दस्य फलभेदपरत्वमस्त्विति शङ्काऽपि परास्ता । न च फलपरत्वं तदस्शंक्यम् । तथा सति विद्याऽविद्यासाध्ययोः फलयोर्द्वयोः कथनाय ते इति द्विवचनस्यैवावश्यकत्वात् । अतो मुमुक्षुप्रकरणात् साधनद्वयनिन्दायाः प्राक्कृतत्वाच्च मोक्षसाधनजिज्ञासायामेवैतन्मन्त्रावतारात् तदित्यस्य मोक्षसाधनपरत्वमेव युक्तम् । एवमवधिपञ्चमीस्वीकार एव श्रुतिसमाधिरपि न भज्यते । यथा—'अन्यदेव तद्विदितादथो अविदितादधि । इति शुश्रुम धीराणां ये नस्तद्व्याचचक्षिरे' इति । दृष्टश्च पञ्चम्यर्थे तृतीयानिर्देशः । 'यथाऽऽपस्तम्बपरिभाषासूत्रे 'अन्यत्राऽऽश्रुतप्रत्याश्रुतप्रवरसंवादसंप्रैषैश्चे' ति । अत्रैतेभ्योऽन्यत्र उपांशुयजुर्वेदेनेत्युपांशुस्वरो विधीयते । एवमन्यत्रापि भारतादौ बहुलं प्रयोगः । तस्माद्बह्वनुपपत्तिग्रस्तत्वेनास्यार्थस्यासमञ्जसत्वादाचार्यपादवर्णितार्थ एव सम्यगुपपन्नत्वाच्छ्रुत्यर्थ इति ।

ननु धीराणामित्यस्य कुत्रान्वयः ? न तावदितीत्यनेन, इतिशब्दस्या-

तेषां धीराणां परमात्मध्यानपराणां वचनमित्यध्याहार्यम् । नटस्य शृणोतीतिवद्वा कथंचित् पञ्चम्यर्थे षष्ठी । इति शुश्रुम एवंप्रकारमश्रौष्म । ब्रह्मविद्याया दुरवगाहत्वेन निश्शेषग्रहणाशक्यत्वाभिप्रायोऽत्र लिङुक्तम ॥ १० ॥

विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ११ ॥

अन्यदिति संग्रहेणोक्तं विवृणोति 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह' इति । यः यथावस्थितोपदेशवान् । विद्यां परमात्मोपासनरूपां अविद्यां तदङ्गभूतकर्मात्मिकां च । एतदुभयं परस्परविरोधप्रसङ्गरहितम् । सह वेद-अङ्गाङ्गिनोरनुष्ठेयत्वसाम्यादुभयं सह वेदेत्यविशेषेण वेदनीयतोक्तिः । न पुनर्हेयोपादेययोः ज्ञातव्यत्वसाम्यात् । पूर्वमविद्याया निन्दनात्तदौचित्यमिति चेत् तर्हि विद्याया अपि निन्दिततया हेयद्वयसमुच्चयोक्तिप्रसङ्गः । तथा सत्युत्तरवाक्यमपि विघटते । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत इति । अयमर्थः— विद्याङ्गतया चोदितकर्मणा मृत्युं ज्ञानसङ्कोचरूपमृत्युहेतुं प्राक्तनकर्म तीर्त्वा निरवशेषमुल्लंघ्य । विद्यया पूर्वोक्तपरमात्मानुदर्शनरूपया । अमृतमश्नुते एतदमृतमभयमेतद्ब्रह्म इत्यादिषु सर्वदोषरहितत्वेन प्रतीतं परमात्मानं प्राप्नोतीत्यर्थः । अत्रामृतशब्दस्य मोक्षप-

---

भेदार्थकत्वे प्रकारार्थकत्वे वा येनाभेदो यस्य प्रकारश्च विवक्षितः तस्यैव तत्रान्वयस्य व्युत्पन्नत्वात् । नापि शुश्रुमेत्यनेन, अयोग्यत्वात् तत्राह— वचनमित्यध्याहार्यमिति । शुश्रुमेत्यनेनाप्यन्वयः समर्थ्यते नटस्येति । दृष्टान्ते कर्मैव न श्रुतम् । तच्छ्रवणे हि नटस्येति षष्ठ्यास्तत्रैव स्वरसोऽन्वयो भविष्यति । अत्र तु सत्यपि कर्मपरतिशब्दश्रवणे तथाऽन्वयः स्वीकर्तव्यः । अथ वेतीत्यस्यानेनप्रकारेणेत्यर्थविवक्षया, अनेन प्रकारेण धीरेभ्योऽश्रौष्मेत्यर्थो वर्णनीय इत्यभिप्रेत्य कथञ्चिदित्युक्तम् । ब्रह्मविद्याया इत्यादि । अत एव सम्भवन्त्यां गतौ व्यत्ययानुशासनमाश्रितमयुक्तमिति ध्येयम् ॥ १० ॥

रत्वेऽपि न पुनरुक्तिः । मृत्युं तीर्त्वेत्यस्योपायविरोधितरणपरत्वात्, अमृतमश्नुत इति प्राप्तिविरोधिनिवृत्तिलाभोक्तेः । अत्र 'अविद्यया मृत्युं प्राप्य स्थित' इति व्याचक्षाणा निर्बाधं पदवाक्यस्वारस्यमुपबृंहणं च प्रस्मृत्य स्वाविद्यया स्वयमेव मृत्युं प्राप्य स्थिताः । एतदेव वाक्यमनुसंहितं वैष्णवे पुराणे

'इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रय ।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥'

इति । इह त्वविद्याशब्दः प्रकरणादौचित्याच्च विद्याङ्गकर्मविषय इत्यभाणि भाष्यकारैः 'अत्राविद्याशब्दाभिहितं वर्णाश्रमाविहितं कर्म' इति 'मृत्युतरणोपायतया प्रतीताऽविद्या विद्येतरद्विहितं कर्मैव' इति च । विद्यां पर्युदस्यन्नयमविद्याशब्द क्षत्रियादिविषयाब्राह्मणशब्दादिवदासन्नतदनन्तरवृत्तिरन्तरङ्गकर्मविषय इति भावः । एवं

'तपो विद्या च विप्रस्य निश्श्रेयसकरावुभौ ।
तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते ॥'

इत्याद्युपबृंहणान्यपि सुसङ्गतानि भवेयुः । ये पुनरिह विद्याकर्माख्यसाधनद्वयसमुच्चयं मृत्युतरणामृतत्वप्राप्तिरूपसाध्यद्वित्वं च वर्णयन्ति, तेषां कर्मज्ञानयोरङ्गाङ्गिभावं विद्ययैव मृत्युतरणं च व्यक्तं प्रतिपादयद्भिः श्रुतिस्मृतिसूत्रगणैर्यथाभाष्यमुत्तरं देयम् । विषमसमुच्चयवादेऽपि यथाभागं सन्निपत्योपकारकत्वसम्भवे गत्यन्तरगमनिका नीतिविद्भिर्न सम्मन्यते ॥ ११ ॥

---

सः केशिध्वज । यादवप्रकाशमतमनूद्याह—ये पुनरिति । भास्करमतं दूषयति विषमेति । सन्निपत्योपकारकत्वेति । रजस्तमोनिबर्हणेन शोधकतया ध्याननिष्पत्तिसाधनमन संस्कारकत्वेत्यर्थः । गत्यन्तरम् आरादुपकारकत्वम् । प्रयाजादीनां यागशरीरानिष्पादनमन्तरेण केवलं निष्पन्नयागे फलजननयोग्यताधायकत्वमिवोत्पन्नायां विद्याया ब्रह्मप्राप्तिजननयोग्यताधायकत्वम् । नीतिविद्भिरिति । सन्निपत्योपकारकत्वे सम्भवत्यारादुपकारकत्वाश्रयणमयुक्तम् । अत एव स्थाणौ स्थाण्वाहुतिं जुहोती-

अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते ।
ततो भूय इव ते तमो य उ सम्भूत्यां रताः ॥ १२ ॥

**तदेवमुपास्यं परमात्मतत्त्वं साङ्गतदुपासनरूपं च परमहितं परमपुरुषार्थपर्यन्तमुपदिश्यानन्तरं त्रिभिः श्लोकैः प्रतिबन्धनिवृत्तिपरब्र-**

---

स्यत्र यूपव्रश्चनस्थाणुसंस्कारकत्वमेव स्थाण्वाहुतेः स्वीकृतम्, न त्वारादुपकारकत्वम् । सम्भवति दृष्टार्थत्वेऽदृष्टार्थत्वकल्पनं चायुक्तम् । अत एव स्वाध्यायाध्ययनस्यार्थज्ञानार्थत्वमक्षरग्रहणार्थत्वं वा स्वीक्रियते न स्वर्गार्थत्वमिति भावः ॥ ११ ॥

**प्रतिबन्धेत्यादि** । यद्यपीह पूर्वोक्तविद्याफलमेव सम्भूत्यर्थः,अथापि नाविद्याफलस्य विद्याप्रतिबन्धकनिवृत्तेः प्रागुक्ताया असम्भूतिपदेन ग्रहणम् । विद्यानुष्ठानकाले तादृशफलानुसन्धानकरणस्याप्रसक्तत्वात् । कर्मानुष्ठानकाले तस्य प्रसक्तत्वेऽपि न तस्यानुसन्धानस्याङ्गत्वमस्ति, अविहितत्वात् । विहितं ह्यङ्गं भवति । ब्रह्मप्राप्तिप्रतिबन्धकसुकृतदुष्कृतनिवृत्त्यनुसन्धानं तु

'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य ।
धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि ॥ '

इत्युत्तमपुरुषबलात्कर्तव्यं प्रतीयते । अत एव हान्याधिकरणे सुकृतदुष्कृतहानितदुपायनयोः सर्वत्र विद्यासु समुच्चित्यानुसन्धानमभिहितम् । न च कर्मनिवृत्तेरभावरूपाया ब्रह्मानुभवात्मकभावरूपतया भेदाभावेन कथमेकस्यैवार्थस्य पदद्वयेन वर्णनं भवतीति शंक्यम्, वस्तुत एकत्वेऽपि मतान्तरेषु कर्मनिवृत्तिरूपमोक्षाङ्गीकारेऽपि ब्रह्मानुभवानङ्गीकारात् परिपूर्णब्रह्मानुभवरूपपरज्ञानादौ तदनुभवसत्त्वेऽपि कृत्स्नकर्मनिवृत्त्यभावात् त्वय्यन्ताभिमतयथावस्थितमोक्षस्पष्टप्रतिपत्तये एकस्यैव फलस्य प्रतियोग्यन्वितवेषेण स्वरूपेण च पर्व-

**ब्रह्मानुभवरूपयोः फलपर्वणोः समुच्चित्यानुसन्धानं विद्याङ्गत्वेनोपादेयमित्युच्यते । तत्र प्रथममेकैकमात्रानुसंधानं निन्दति अन्धंतमः—रता इति । एतमितः प्रेत्याभिसम्भविताऽस्मि धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामीत्यादिषु ब्रह्मप्राप्तिरूपा सम्भूतिरुक्ता । तां पर्युदस्यन्नयमसम्भूतिशब्दः तदासन्नप्रतिबन्धविनाशमभिधत्ते । 'सम्भूतिं च विनाशं च' इत्यपि ह्यनन्तरमेवोच्यते । न चात्रासम्भूतिशब्देन सम्भूतेरनुत्पत्तिर्विनाशो वा प्रतिपाद्यः, अमृतप्राप्तिहेतुतयोक्तायाः सम्भूतेः प्रागभावस्य प्रध्वंसस्य वा मृत्युतरणहेतुत्वेन वक्तुमयुक्तत्वात् । अत्रापि तरतेः प्राप्तिवचनत्वं पूर्ववत् प्रतिक्षेप्यम् ॥ १२ ॥**

---

अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ।
इति शुश्रुम धीराणां ये नस्तद्व्याचचक्षिरे ॥

**अन्यदेवेति । अत्र तच्छब्दः समुच्चित्यानुसन्धेयतया वक्ष्यमाणद्वितयं वक्ति ॥ १३ ॥**

---

भेदकल्पनया ग्रहणसम्भवात् । वस्तुतोऽनुसन्धेयतया विहितायाः सुकृतदुष्कृतहानेर्देहवियोगकालिकमात्रत्वे ब्रह्मानुभवस्याऽर्चिरादिगमनानन्तरभावित्वेन तयोर्भेदोऽपि सुवचः । अतो विद्याफल एव पूर्वापरभावित्वेन पर्वद्वयात्मना स्थितयोरत्यन्तसन्निहितयोः अश्व इव रोमाणीत्येकवाक्योपात्तयोः पापविधूननब्रह्मसम्भूत्योरिह ग्रहणमित्याशयेनाह **फलपर्वणो**रिति । **अयुक्तत्वा**दिति । इह हि सम्भूतिमृत्युतरणयोर्युगपत् स्थितिरङ्गीकर्तव्या । यदि संभूतिप्रागभावः सम्भूतिध्वंसो वा मृत्युतरणहेतुः स्यात् सम्भूतिकाले मृत्युतरणं न स्यादिति भावः ॥ १२ ॥

**वक्ष्यमाणद्वितय**मिति । विद्याफलमिति सामान्यरूपेण तच्छब्देन ग्राह्यमिति भावः । इदमत्र मन्त्रतात्पर्यम्—केचन नैयायिकादयो मुमुक्षवः स्वात्मानमेवोपासीना ईश्वरमुपासीना अपि वा ब्रह्मानुभवं मुक्तिकालेऽ

सम्भूतिं च विनाशं च यस्तद्वेदोभयं सह ।
विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ॥ १४ ॥

**अत्राप्यन्यदित्युक्तं विवृण्वन् विद्याङ्गमुभयानुसन्धानमाह संभूतिं—सहेति । तस्यैव फलप्रदर्शनेनावश्यकर्तव्यतां स्थापयति विनाशेन—अश्नुत इति । अनुसन्धीयमानेन विनाशेन प्रतिबन्धमपोह्य सम्भूत्याऽनुसन्धीयमानया ब्रह्म प्राप्नोति । सम्भूतिविनाशानुसन्धानरूपेऽङ्गे स्तुत्यर्थं यथोचितमङ्गिफलनिर्देशः । यद्वा विनाशेन मृत्युं तीर्त्वेति पूर्वोक्तसरूपशब्दे विरूपार्थपरिहाराय विनाशशब्देन मानदम्भादीनां हिंसास्तेयादीनां बहिर्मुखेन्द्रियवृत्तीनां च**

---

नङ्गीकृत्य केवलात्मस्थितिमेव सङ्गिरमाणा केवलाः कर्मनिवृत्तिं फलत्वेनानुसन्दधते । अन्ये च राहुमीमांसका निर्गुणं किमपि कल्पयन्तः कर्मोपश्लिष्टविद्याफलत्वेन सगुणब्रह्मानुभवं स्वीकुर्वाणा अपि तस्य भौमविलक्षणस्वर्गाद्यनुभववत् किञ्चिद्विशिष्टतां केवलमभिप्रयन्तः परममुक्तिमन्यामातिष्ठमाना 'जक्षत्क्रीडन् रममाण' इत्यादिदर्शनेनाशेषाविद्यकबन्धनिवृत्तिमनभ्युपगच्छन्तो यथावत् कर्मनिवृत्त्यनुसन्धानं न कुर्वते । तदुभयवैलक्षण्येनाशेषाविद्यकनिवृत्त्यनुसन्धानं ब्रह्मानुभवरूपमोक्षानुसन्धानं च कर्तव्यम् । अब्रह्मानुभवरूपतयाऽशेषाविद्यकानिवृत्तिरूपतया च तत्तदङ्गीकृतात्फलादन्यदेवाविद्यासहकृतविद्याफलम् । एवं च विषयवैलक्षण्यात् तत्तत्पृथगनुसन्धानापेक्षयेदृशविद्याफलानुसन्धानमन्यदेवेति ॥ १३ ॥

विनाशादेस्तत्तत्साध्याभिन्नत्वेन साधनत्वासम्भवात्तदुपपत्तये असम्भूतिमुपासते इत्याद्यवगतानुसन्धानविषयत्वाकारेण साधनत्वं समर्थयितुं विशिनष्टि अनुसन्धीयमानेनेति अनुसन्धीयमानयेति च । यत्त्विहोक्तं सम्भूत्यसम्भूतिशब्दयोर्विग्रहपरिग्रहतन्निवृत्तिरूपार्थस्वारसिकयोर्ब्रह्मप्राप्त्याद्यर्थपरताकल्पनमनावश्यकम् । अभिसम्भविताऽस्मीत्यादौ सकर्मकत्वौचित्यायाभ्युपसर्गबलात्प्राप्तिरूपार्थस्वीकारेऽपीहोपसर्गाभावान्न तदर्थवर्णनं शक्यम् ।

**विनाशो विवक्षितः । अतो विरुद्धनिवृत्तिरूपाङ्गसेवनेन समाधिवि-रोधिपापमपाकृत्य समाधिनिष्पत्तिरूपब्रह्मसम्भूत्या तदेवाश्नुते । अ-त्र सम्भूतिविनाशशब्दाभ्यां सृष्टिप्रलयादिविवक्षया मृत्युतरणामृत-प्राप्तिरूपफलविभागवचनस्यौचित्यलवोऽपि नोपलभ्यते ॥ १४ ॥**

---

असम्भूतिशब्दस्य सम्भूतिनिवृत्तिपरत्वे स्वरससिद्धे सम्भूतिप्रतिबन्धकविना-शपरता सुतरामेव दुर्वचेति ।

तत्सर्वमक्षरध्यधिकरणश्रुतप्रकाशिकाग्रन्थाश्रवणविजृम्भितम् । तत्र हि स्वविवक्षितार्थस्य स्वारसिकत्वं विद्यान्तरस्वारस्यानुगुण्यं चाभिधायोक्तम् 'सम्भूतिशब्दः सम्भवत्यनेनेति सम्भूतिरिति व्युत्पत्त्या मार्गपरः । एत-मितः प्रेत्याभिसम्भविताऽस्मि, ब्रह्मलोकमभिसम्भवानीति च प्रयोगात् । वि-नाशशब्दश्च सुकृतदुष्कृतविनाशविषयः । अतो मार्गस्य कर्मविनाशस्य च चिन्तनं विद्याङ्गत्वेन समुच्चित्य विधीयत' इति ।

किं च भवदुक्त एव मन्त्रत्रयार्थः कियद्दूरं समञ्जस इति शोधनी-यम् । स खल्वेवम् । सम्भूतिः सम्भवो विग्रहपरिग्रहस्तन्निवृत्तिरसम्भू-तिः । विग्रहपरिग्रहनिवृत्तिमात्रोद्देश्यकोपासननिष्ठाः कैवल्यमेव प्रविशन्ति । तत्र हि केवलात्मानुभवे न भवति शरीरपरिग्रहः । पुनः पुनर्भोगोपकरण-शरीरपरिग्रहोद्देश्यकोपासननिष्ठाश्चैश्वर्यमेव लभन्ते । सम्भूतिसाध्यमैश्वर्य-लक्षणं फलमसम्भूतिसाध्यात् कैवल्यादन्यत् । असम्भूतिसाध्यं कैवल्यं च सम्भूतिसाध्यादैश्वर्यादन्यत् । शरीरपरिग्रहं तन्निवृत्तिरूपं च विनाश-मसम्भूतिं यो वेद, स विनाशेन विग्रहपरिग्रहयोग्यतानिवृत्त्या प्रकृतिसं-म्बन्धमतिलंघ्य सम्भूत्या विग्रहपरिग्रहयोग्यतासिद्ध्या परं ब्रह्माश्नुते । अ-शेषशेषतैकरतिरूपनित्यकैङ्कर्यप्राप्तिपर्यवसायिनमनुभवं लभत इति ।

तत्र सम्भूत्यसम्भूतिशब्दौ किं विग्रहपरिग्रहतान्निवृत्तिपरौ किं वा विग्रहपरिग्रहयोग्यतातन्निवृत्तिपरौ । नाद्यः; तथा सति विग्रहपरिग्रहनिवृ-

त्तावपि प्रलयसमये प्रकृतिसम्बन्धसत्त्वेन तत्तरणासम्भवेन मृत्युं तीर्त्वेत्यस्य प्रकृतिसम्बन्धमतिलंघ्येत्यर्थवर्णनासम्भवात् । दिव्यविग्रहपरिग्रहाभावेन स्वरूपमात्रेण स्थितावप्यभ्यासाधिकरणोक्तरीत्यैव सतोऽकर्माधीनस्य च ब्रह्मानुभवस्य विग्रहपरिग्रहसाध्यत्वाभावाच्च । न चाश्नुत इति परिचरतीत्यर्थकम् ; स्वाम्यभिमताचरणस्यैव परिचर्यारूपतया विग्रहमन्तरेण परिपूर्णब्रह्मानुभवस्य क्रियमाणस्यापि परिचर्यात्वसम्भवेन तत्रापि तत्परिग्रहावश्यकत्वाभावाच्च । विग्रहसाध्यकैङ्कर्यग्रहणे चाश्नुत इति पदस्य शक्यार्थत्यागः । स्वकृतकैङ्कर्यजन्यभोगभाक्त्वेन स्वकृततदनुभवजन्यभोगभाक्त्वेन च ब्रह्मानुभवतीति कृत्स्नार्थग्रहणे सम्भवति एकदेशग्रहणात्संकुचितार्थकत्वापत्तिश्च । नान्त्यः ; विग्रहपरिग्रहयोग्यतानिवृत्त्युद्देश्यकोपासनेन कैवल्यप्राप्त्यसम्भवात् । कैवल्यस्यानित्यतया तत्प्राप्नुवतो विग्रहपरिग्रहयोग्यतानिवृत्तौ प्रमाणाभावात् । न च योग्यतासत्त्वेऽपि सामग्र्यभावेन कैवल्यकाले विग्रहपरिग्रहस्यानुपहितत्वात्कियन्तमपि कालं सामग्रीविघटनमेव योग्यतानिवृत्तिरित्युच्यत इति वाच्यम् । तथा सति प्रलयकालेऽपि तादृशयोग्यतानिवृत्तिसत्त्वेन प्रलयोत्पत्त्याप्युपासनचारितार्थ्येन कैवल्यसिद्ध्यवश्यम्भावस्य दुर्वचत्वात् । न चासम्भूत्युपासनं नाम विग्रहपरिग्रहनिवृत्तिपूर्वककिञ्चिदनुभवरूपफलोद्देश्यकोपासनमिति न दोष इति वाच्यम् । असम्भूतिशब्दस्य तावदर्थस्वारसिकत्वाभावात् । तथा तृतीयमन्त्रे विग्रहपरिग्रहयोग्यतेत्यत्र योग्यतापदेन किं गुणाष्टकाविर्भावग्रहणम् , उत विग्रहपरिग्रहौपयिकसङ्कल्पविशेषग्रहणम् ? नाद्यः ; तस्य विग्रहसम्बन्धमात्रसाधनत्वाभावेन विग्रहपरिग्रहयोग्यतेति विशेषपदेन तदुक्तेरयुक्तत्वात् । नान्त्यः ; पूर्ववदश्नुत इति पदस्य शक्यार्थत्यागसंकुचितार्थकत्वादिप्रसङ्गात् । एवं सम्भूतिशब्दस्य योग्यतापर्यन्तार्थवाचित्वाभावादपि न सम्भूत्यसम्भूतिशब्दयोरीदृशार्थवर्णनं युज्यते । किं च शरीरपरिग्रहोद्देश्यकं तद्योग्यतोद्दे-

श्यकं वोपासनमेव न भवति । उपासनकालेऽपि तस्य तद्योग्यतायाश्च सत्त्वेन तदिच्छाया असम्भवात् । न खल्वशरीर एव कश्चिदुपास्ते । अनुपासनेऽपि बद्धस्य किञ्चित्शरीरसम्भवनियमाच्चैतदुपासनं व्यर्थम् । न चेतः कल्याणतरविग्रहपरिग्रहोद्देशेनोपासनं सम्भवतीति वाच्यम् । तथा सति सम्भूतिशब्दस्य तादृशविग्रहपरिग्रहे लक्षणापत्तेः । असम्भूतिशब्देन तादृशविग्रहनिवृत्त्युद्देश्यकोपासनस्यैव वक्तव्यतया प्रकृतोपासनावच्छेदकविग्रहसदृशतन्निकृष्टान्यतरविग्रहापादनेनाप्युपासनाचारितार्थ्येन कैवल्यसिद्धेरनावश्यकत्वाच्च । न च कल्याणतरेऽपि विरक्तस्य कथमीदृशविग्रहजिघृक्षेति वाच्यम् । एतदिच्छाया अकिञ्चित्करत्वात् । यदि तत्रेच्छाभावान्न तदुत्पत्तिः तर्हि यः कैवल्यमप्यनिच्छन् विगृहपरिग्रहयोग्यतानिवृत्त्युपासनं कुरुते तेन मोक्ष एव लब्धव्यः स्यात् । तथा च मोक्षार्थं विगृहपरिगृहोपासनसमुच्चयविधानं व्यर्थम् । अन्ततः सर्वविधविगृहपरिगृहयोग्यतानिवृत्ताविवासम्भूतिशब्दतात्पर्यवर्णने प्रकृतमन्त्रसम्भूतिशब्दार्थो यस्तन्निवृत्तिपरत्वस्वारस्यमसम्भूतिशब्दे प्रतीयमानं त्यक्तमेव भवति । एवं मुमुक्षुणा समुच्चित्य विगृहपरिगृहतदभावोपासने क्रियमाणे न सामान्यतो विगृहपरिगृहाभावोपासनं कर्तुं शक्यते , विग्रहपरिग्रहस्याप्युपास्यमानत्वेन विरोधादिति कर्माधीनविग्रहपरिग्रहाभाव एवोपास्यः । तत्र च योगिनामिव मुक्तानामपि सर्वशक्तानां कर्माधीनपरकीयविगृहप्रवेशोऽपि स्वीकार्य इति न सामान्यतः कर्माधीनविगृहस्यापरिगृहः शक्योपासन इति स्वकर्माधीनो यो विग्रहपरिग्रहस्तन्निवृत्त्युपासनं कर्तव्यम् । सर्वमिदं भवद्गून्थपरामर्शेनैव सुज्ञानम् । एवञ्चेदृशनिवृत्त्युपासनेनैवाकर्माधीनविग्रहपरिग्रहस्य स्वरूपेणावस्थानस्य चावस्थाद्वयस्य मुक्तिकालिकस्य लाभे विग्रहपरिग्रहोपासनं पृथक्क्रियमाणं व्यर्थम् । कर्माधीनविग्रहपरिग्रहनिवृत्तेः स्वरूपेणावस्थाने पर्यवसानमिति पृथग्विग्रहपरि-

ब्रह्मोपासनमुपदिष्टमिति चेत् तस्या दिव्यविग्रहपरिग्रह एव पर्यवसानं विधाय स्वस्वरूपेणोपासनमेव कुतः पृथङ्नोपदिष्टमिति । यत्तु प्रथमतः परिग्रह-तन्निवृत्तिपरतामुभयोः पदयोरुक्त्वा तृतीयमन्त्रेऽर्थौचित्याय योग्यतातन्निवृत्ति-परत्वाश्रयणम् । तदेकविधार्थस्यैव सर्वत्र वक्तव्यत्वादयुक्तमेव ।

यापि द्वितीयमन्त्रार्थवर्णनवैखरी, साऽपि भवत्कृतपूर्वमन्त्रत्रयान्तःपा-त्यन्यदेवाहुर्विद्ययेत्यादिमन्त्रार्थवर्णनवैखरीवैषम्यादग्राह्या । तत्र हि केवल-विद्याफलस्य केवलाविद्याफलस्य चान्धतमसप्रवेशयोर्मिथो भेदस्य प्रथमम-न्त्र एव स्पष्टतया द्वितीयमन्त्रे पुनस्तदुक्तेरयुक्ततया समुच्चित्यानुष्ठीयमानयो-र्विद्याऽविद्ययोर्ये फले ब्रह्मप्राप्तिविद्योपकाररूपे तृतीयमन्त्रे वक्ष्यमाणे तद्गत-मिथोभेदपरत्वमेव द्वितीयमन्त्रे भवदभिमतं लक्ष्यते । एवं सति तामेव री-तिमवलम्ब्य प्रकृतमन्त्रत्रयेऽपि तृतीयमन्त्रे वक्ष्यमाणयोः प्रकृतिसम्बन्धहा-निब्रह्मप्राप्त्योर्मिथोभेदवर्णनपरत्वं द्वितीयमन्त्रस्य वक्तव्यं विहाय तत्तत्केव-लोपासनफलभूतकैवल्यैश्वर्यद्वयभेदपरत्ववर्णनं कथं पुनरौचित्यमावहति । अथा-त्र प्रकृतिसम्बन्धहानेरेवाभावरूपाया ब्रह्मप्राप्तिरूपभावरूपत्वावश्यकतया त-योर्भेदवर्णनासम्भवादेवं वर्णनमिति चेत् तर्हि पूर्वमन्त्रत्रयान्तर्गतद्वितीयम-न्त्रे वैतदानुगुण्यं सम्पाद्यताम् । अथ पुनरुक्तिभिया तत्परित्याग इति चेत् सैषा पुनरुक्तिरिहापि तदवस्थैवेति नैवं मन्त्रत्रयार्थो वर्णनीयः ।

ननु सम्भूतिशब्दः प्राप्त्यर्थको न भवति । शरीरपरिग्रहे तु स्वरस इति चेत् , तन्न , विग्रहपरिग्रहेऽपि तस्य शक्तत्वाभावात् । 'सम्भवाम्या-त्ममायया' 'सम्भवामि युगे युगे' इत्यादौ विग्रहपरिग्रहे प्रसिद्ध इति चेत् घटः सम्भवति, पटः सम्भवति, तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः इत्यादौ का वार्ता ; न हि तत्र कस्यचिद्देहपरिग्रहः प्रतिपिपादयिषितः । अत उत्पत्तिरेव सम्भूतिः । सा च घटादौ मुख्या । तस्याश्चोत्पत्तेर्जी-

वात्मनि बाधितत्वाद्विग्रहसंयोगस्यैवोत्पत्तित्वाश्रयणमिति सम्भूतिशब्दस्योत्पत्ति-परत्वमेव मुख्यम् । देहसंयोगपरत्वं पुनरमुख्यम् । एवञ्चोत्पत्त्यर्थकस्य सम्भूतिशब्दस्य देहप्राप्त्यर्थकत्ववत् ब्रह्मप्राप्त्यर्थकत्वमपि सम्भवति । यथाऽऽत्मनि देवो जातो मनुष्यो जात इत्यादिव्यवहारः, तथा मुक्तो जात इति व्यवहारोऽप्यस्त्येव । अवस्थाविशेषस्यैवोत्पत्तिशब्दार्थत्वात् स्वभावविकारभाजो जीवस्य ज्ञानसङ्कोचविकासयोरेव ध्वंसजन्मरूपतया मुक्तिकालिकपरिपूर्णज्ञानविकासस्य ब्रह्मानुभवात्मनो जन्मरूपत्वमत्यन्तमुचितमिति विग्रहपरिग्रहापेक्षयाऽपि ब्रह्मप्राप्तेः सम्भूतिशब्दार्थत्वं युज्यतेतराम् । अतो भवदीयेनैव पथा प्राप्त्यर्थत्वं सूपपादम् ।

यदप्यसम्भूतिशब्दस्य सम्भूतिप्रतिबन्धकविनाशपरता सुतरामेव दुर्वचेति तदपि वार्तम् । न खलु नञः प्रतिबन्धकविनाशवाचित्वमारोप्यासम्भूतिशब्देन सम्भूतिप्रतिबन्धकविनाशरूपमर्थं साधयामः, येनैवमुच्यते । किंतु असम्भूतिशब्दः सम्भूत्यभावपरः । स च प्रतिबन्धकविनाश एव पर्यवस्यतीति ब्रूमः । कथमिति चेत् उक्तं तावत् सम्भूतिशब्दस्य न विग्रहपरिग्रहे शक्तिरपि तूत्पत्ताविति । तथा चासम्भूतिरनुत्पत्तिः । अनुत्पत्तिशब्दश्चोत्पत्तिप्रागभावपरतयैव भूम्ना प्रयुज्यते। अतः शरीरपरिग्रहरूपामुख्योत्पत्तिस्वीकारेऽपि तत्परिग्रहप्रागभाव एव तदर्थः स्वरसः । न तु परिग्रहनिवृत्तिः । किं चात्मनो यानि शरीराण्येतावदुत्पन्नानि, न तदुत्पत्तिनिवृत्तिमुद्दिश्य किमप्युपासनमनुष्ठेयम् । उत्पत्तेराद्यक्षणभावित्वेन द्वितीयक्षणे स्वयमेव निवृत्तेः । एवं तत्परिग्रहनिवृत्तिरपि नोपासनोद्देश्यभूता । तस्या अपि 'जातस्य मरणं ध्रुव'मिति स्वयमेव जायमानत्वात् । अत इतः परं शरीरोत्पत्तिः परिग्रहो वा मा भूदित्येवोद्देश इति प्रागभावस्यैवोद्देश्यत्वम् । न तु ध्वंसरूपनिवृत्तेः । प्रागभावश्च भाविनो वस्तुनः पूर्वं वर्त-

मानोऽभावः । न च मुक्तिभाज आत्मनः कर्माधीनविग्रहपरिग्रहस्य मुक्तिकाले जातु भावित्वं सुवचम् । येन तस्मिन्नुत्पत्तिप्रागभावो नाम कश्चित् प्रसिद्धः सूपपादः स्यात् । अत उत्पत्तिप्रागभावो नामोत्पत्तियोग्यतानिवृत्तिरिति वक्तव्यम् । एवं हि सति तृतीयमन्त्रे विग्रहपरिग्रहयोग्यतानिवृत्तिरसम्भूतिशब्दार्थ इति भवदुक्तेरपि समञ्जसो निर्वाहः सम्प्रति भवताऽपि ग्राह्यः । सा च योग्यता विचार्यमाणा पुंसः कर्मसम्बन्ध एव। तथा च ब्रह्मप्राप्तिरूपसम्भूतिप्रतिबन्धकं यत् पुण्यपापरूपं कर्म तन्निवृत्तिरेवासम्भूतिरिति भवद्रीत्यैव निराबाधं सुवचमिति निरीक्ष्यताम् । तस्मान्मुमुक्षोरपेक्षिता ब्रह्मानुभवात्मकज्ञानविकासरूपोत्पत्तिः कर्माधीनोत्पत्तियोग्यतारूपब्रह्मप्राप्तिप्रतिबन्धककर्मनिवृत्तिश्च सम्भूत्यसम्भूतिशब्दार्थाविति नात्र शङ्काशंकुशकलस्याप्यवकाशं पश्यामः ।

वस्तुतस्तु ब्रह्मलोकमभिसम्भवानीत्यादौ सकर्मकत्वदर्शनात्सम्भूतिशब्द उत्पत्त्यर्थक इव प्राप्त्यर्थकोऽपि भवतीति ज्ञायते । न च समुपसृष्टत्वे भवतेरुत्पत्तिरेवार्थ इति नियन्तुं शक्यम् । अर्थान्तरस्यापि दर्शनात् । यथा पूर्वपक्षे कस्मिन्नपि प्राप्ते सिद्धान्तमारभमाणा वदामः नैतत्सम्भवतीति । यथा च 'नित्यत्वमात्मनः सम्भवती'ति । एवं 'उत्पत्त्यसम्भवा'दिति सूत्रादौ सर्वत्र द्रष्टव्यम् । इह हि सर्वत्र सम्भवतीत्यस्य भवितुमर्हतीत्यर्थः । तथा च सत्तायोग्यत्वं सम्भूतिः । तथा प्राप्तिरपि सम्भूतिर्भवितुमर्हति । अथ कथमभ्युपसर्गाभावे प्राप्तिवाचित्वमिति चेत् तत्किमभ्युपसर्गमात्रेण भवतेः प्राप्त्यर्थकत्वमित्याशयः उताभिसमुभयोपसृष्टत्व एवेति । नाद्यः । अभिभवतीत्यादावन्यस्यैवार्थस्य दर्शनात् । नान्त्यः; अभ्युपसर्गाभावेऽपि प्राप्तिपरतया प्रयोगदर्शनात् । यथा—उभौ 'सम्भूयाऽऽगता' वित्यादौ मिलित्वा परस्परं प्राप्येत्यर्थे प्रयोगः । गच्छतेरिव संभवतेरपि जातु सक-

मैकत्वं जात्वकर्मकत्वं च युज्यते । न च संभवतेरेव गच्छतिपर्यायत्वे अ-भीति प्रयोगासम्भवः, येनोभयोरुपसर्गयोरेव गमनतात्पर्यग्राहकत्वमेषितव्यं स्यात् । अत एव **वाय्वधिकरणे भाष्ये** प्रकृतविषय एवाभिपूर्वस्य गच्छतेर्भूम्ना प्रयोग इति युक्तं समुपसर्गमात्रस्य तात्पर्यग्राहकत्वम् । छान्दो-ग्ये च (५, १०) ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपरपक्षं.... ....। .... संवत्सरमभिप्राप्नुवन्तीति, अभिसम्भवन्तीत्यस्य स्थानेऽभिप्राप्नुवन्ती-ति श्रूयमाणमभ्युपसर्गं विनैव प्राप्त्यर्थकत्वं दर्शयतीत्यलम् । यथा च-- बृहदारण्यके (३, ३) तां समभवत् ततो मनुष्या अजायन्तेत्येवं बहुवारं प्रयोगः । तत्र हि मैथुन्येन प्राप्तवानिति तदर्थः । स्त्रीवाचिपदसमभि-व्याहारादिबलान्मैथुन्येनेति विशेषो लभ्यते । सम्भवतिस्तु प्राप्तिमात्रवचनः; अन्यथा शक्यार्थगौरवापत्तेः । यथा चार्चिरादिविषय एवा**नियमाधिकर-णश्रुतप्रकाशिकायां** स्मृतिवचने--

'य एवमेनं जानन्ति ये चारण्यकमाश्रिताः ।
उपासते तपः सत्यं श्रद्धया परया युताः ॥
क्रमात्ते **सम्भवन्त्यार्चि**रहः शुक्लं तथोत्तरम् ।'

इति विस्पष्टमभिमन्तरेण प्राप्त्यर्थे प्रयोगः । अतो नूनं श्रुतप्रकाशिकाद्यपराम-र्शदोषादापतितः सर्वोऽयं संरम्भः ।

स्यादेतत् । यदि सम्भूतिशब्द इह प्राप्तिवचनः, कथं तर्ह्यसम्भूतिशब्दः प्रतिबन्धकविनाशपर इति । अत्रोत्तरमाचार्यपादैरेवाभाषि 'तां पर्युदस्यन्नय-मसम्भूतिशब्दस्तदासन्नप्रतिबन्धकविनाशमभिधत्ते' इति । अयं भावः--पूर्वम-न्त्रत्रयानुरूप्यं तावदस्मिन्नपि मन्त्रत्रये युक्तं स्वीकर्तुम् यावत् सम्भवति । तत्र भगवता भाष्यकृतैव 'अविद्या विद्येतराद्विहितं कर्मैवेत्यविद्याशब्दो न विद्यानिवृत्तिपरः । अपि तु विद्येतरपरः सन् नञः सजातीयप्रकृतेतराभि-

धायकत्वस्वाभाव्याद्विद्यावददृष्टद्वारा साधनं विहितं कर्मेहे'ति व्युदपादि । अतस्तदानुरूप्यायासम्भूतिशब्दोऽपि सम्भूतीतरपर एव सन् सम्भूतिवदेव मुमुक्षुचिन्तनीयं तद्वदेव विद्याङ्गचिन्तनविषयभूतं तयैव सह 'अश्व इव रोमाणी'त्येकवाक्योपात्तं सुकृतदुष्कृतविनाशं वक्तीत्यभ्युपगन्तव्यमिति । अतः पूर्ववैरूप्यप्रसङ्गेनापि नञो निवृत्तिपरत्वं भवदुक्तमयुक्तमेव । नन्वेवं पूर्वसारूप्यसंरक्षणावश्यकत्वे तत्र यथा मृत्युतरणस्याविद्याशब्दशक्यार्थसाध्यत्वं अमृतत्वप्राप्तेश्च विद्याशब्दशक्यार्थसाध्यत्वं वर्णितम् ; तथेहापि वक्तव्यम् । तच्च विनाशसम्भूतिशब्दशक्यार्थयोरेव साध्यभूतप्रतिबन्धविनाशब्रह्मानुभवरूपत्वाद्दुष्करम् । अतोऽन्य एवार्थश्चिन्तनीय इति चेत्—उच्यते । सुघटमेव तावत् सम्भूतिशब्दस्य प्राप्त्यर्थकत्वग्रहणेनैवेदमप्यस्माकम्, यदि वक्तव्यं स्यात् । तथा हि—विनाशः प्रतिबन्धकसुकृतदुष्कृतनाशः । मृत्युतरणं तत्साध्यं प्रकृतिलङ्घनम् । यो मृत्युमन्तरे सञ्चरन् यं मृत्युर्न वेदेति हि सुबालोपनिषदि प्रसिद्धं मृत्युशब्दस्य प्रकृतिवाचित्वम् । सम्भूत्याऽमृतमश्नुत इति क्रमेण 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इत्युक्तार्थद्वयपरम् । अथ वा सम्भूतिर्न ब्रह्मप्राप्तिः । अपि तु 'ब्रह्मलोकमभिसम्भवानी'त्युक्तब्रह्मलोकप्राप्तिः । अमृतमश्नुत इति तत्साध्या ब्रह्मप्राप्तिरुच्यत इति । तर्हि कथमाचार्यपादैरित्थमर्थो न वर्णित इति चेदुच्यते । प्राचीनस्य मन्त्रत्रयस्य समुच्चित्य विद्याकर्मानुष्ठानप्रतिपादकत्ववदस्यापि समुच्चित्य किञ्चिदनुष्ठानप्रतिपादकत्वं युक्तम् । न तु मुक्तस्य कर्मनाशः सम्भूतिश्च भवत इति केवलकथामात्रत्वमिति मनसिकृत्य व्यासार्यैः 'मार्गस्य कर्मविनाशस्य च चिन्तनं विद्याङ्गत्वेन समुच्चित्य विधीयत' इति व्याहृतम् । अत एव किल भवताऽप्युपासनविधानमिह वर्णितम् । एवं च यत्किञ्चिदुपासनद्वयस्य समुच्चित्य विधौ स्वीकृते विधेययो-

र्ये फले तत्सङ्कीर्तनमेव पूर्ववद्युक्तम् । अन्यथा परम्पराभाविफलकथनस्ये-ष्टत्वे कर्मनाशोपासनेन कर्मनाशलाभस्तेन प्रकृतिसम्बन्धत्यागः तेन ब्रह्मलो-कप्राप्तिस्तया ब्रह्मप्राप्तिरिति कर्मनाशोपासनस्यापि ब्रह्मप्राप्तिः फलत्वेन वक्तुं युक्ता स्यात् । अतः सर्वस्यापि फलस्य विद्यासाध्यत्वेऽपि विदुषा कर्मनाशा-र्चिरादिगमनब्रह्मलोकादिप्राप्तिप्रभृतिसर्वचिन्तनस्य क्रियमाणत्वेन तत्क्रतु-न्यायेन तत्तदंशोपासनस्य तत्तदंशोपयोगित्वौचित्याद्विनाशादिपदेन प्रकृतावि-धेयकर्मनाशाद्युपासनविवक्षया कर्मनाशादेरेव तत्साध्यत्वं युक्तं वर्णयितुमिति, पूर्वस्मादस्मिन् मन्त्रत्रये क्वचित् क्वचित् पदार्थवैषम्येऽपि यत्र विषये तात्पर्य-मनुष्ठेयार्थद्वयसमुच्चयस्यावश्यकत्वे समुच्चितयोश्च पृथग्भूतापेक्षयाऽन्यत्वे तत्साध्यफलभेदे च, तदंशे वैषम्यं न स्वीकर्तुमुचितमिति च मनसिकृत्याचा-र्यपादैरन्यथैव वाक्यार्थोऽवर्णि । पदार्थवैषम्यं हि सम्भूत्यसम्भूतिपदयोर्विग्र-हपरिग्रहतन्निवृत्तिपरत्वं प्रथमतोऽभिधायान्तिममन्त्रे तद्योग्यतातन्निवृत्तिपर-तां ब्रुवतो भवतोऽप्यस्त्येव । प्रथमे मन्त्रत्रये उपासत इत्यस्यानुतिष्ठन्तीत्य-र्थः । इह तूपासनं कुर्वत इति । वेदेत्यस्य जानातीति उपास्त इति । एवं पदार्थवैषम्यमुभयैरपि स्वीकृतम् । अत्यन्तानुरूप्येणार्थवर्णनं चाचार्यपादा द्वितीययोजनया करिष्यन्तीति न किञ्चिदनुपपन्नम् ।

नन्वेवं व्यासार्याभिमतं सम्भूतिशब्दस्यार्चिरादिमार्गपरत्वमाचार्यपादैः कथमुपेक्षितमिति चेत् नात्यन्तमुपेक्षितमेव । श्रीमति न्यायसिद्धाञ्जने तस्या-प्यर्थस्याभिहितत्वात् । परं त्विह सम्भूतिशब्दस्य क्तिन्प्रत्ययान्तस्य प्राप्ति-साधनमार्गपरत्वापेक्षया प्राप्तिरूपभावार्थस्वारस्यात् अश्व इव रोमाणीत्यादौ प्राप्तेरेवैकवाक्योपात्तत्वात् अर्चिरादिमार्गस्यानुपात्तत्वात् अभिसम्भवानि, अ-भिसम्भविताऽस्मीत्युत्तमपुरुषबलेन प्राप्त्यनुसन्धानस्यापि स्पष्टत्वादुक्तरीत्या चिन्तनस्य विधेयतया तृतीयमन्त्रोत्तरार्धस्य चिन्तनरूपविधेयफलसङ्कीर्तनपर-

तया ब्रह्मप्राप्त्यनुसन्धानं प्रति ब्रह्मप्राप्तेः फलत्वोपपत्तेश्च प्रातिरूपयथाश्रुतार्थ एवाऽऽदृतः । अतो भवदुक्तार्थस्यानुपपन्नत्वाद्यथाभाष्यमेव श्रुत्यर्थः ।

एवं व्यासार्यवर्णितमर्थमौचित्येन मात्रया परिष्कृत्योपवर्ण्याथ पूर्वमन्त्रत्रयानुरूप्यस्य कात्स्न्र्येन सम्पादनायैवञ्जातीययोजनास्वनाश्वासात् योजनान्तरमाह यद्वेति । **समाधिनिष्पत्तिरूपब्रह्मसम्भूत्येति** निष्पत्तिशब्दप्रयोगेण, ब्रह्मेति कर्मनिर्देशेन च सम्भूतिशब्दस्योत्पत्त्यर्थकत्वे वा प्राप्त्यर्थकत्वे वोभयथाऽपि मुमुक्ष्वपेक्षितोपायविशेषपर्यवसानं सुगममिति सूचितम् ।

अथ स्यात्—अत्र दूषितव्याख्याने यच्च यावच्चोक्तं तच्च तावच्च तथैव न ग्राह्यम् । प्रमेयमात्रग्रहणेन स्वबुद्ध्येत्थं परिष्क्रियताम् । परविद्यायाः प्रागुक्ताया ऐश्वर्यकैवल्यापवर्गरूपपुरुषार्थत्रितयहेतुत्वात् विद्यामनुतिष्ठन्नपि यद्यैश्वर्यकैवल्ययोरन्यतरदपेक्षते, न तावता परमपुरुषार्थलाभ इति तदुपेक्षापूर्वमपवर्गमपेक्षयतीदं मन्त्रत्रयम् । तत्र सम्भूतिशब्द उत्पत्तिवचन एव शरीरपरिग्रहपूर्वमनुभवनीयैश्वर्यसिद्धिपरः । असम्भूतिशब्दः कैवल्यपरः । इमे फले उद्दिशतामन्धतमसप्रवेश एव । ननु सम्भूत्यसम्भूत्युभयोद्देशे तदुभयप्राप्त्या भूयिष्ठमनिष्टमापद्यते । नैवम् । प्रत्येकमुद्दिश्यमानसम्भूत्यसम्भूत्यपेक्षया समुच्चयेनोपास्यमानसम्भूत्यसम्भूतिपदार्थद्वयस्यान्यत्वात् । य एवं समुच्चयेन गुणाष्टकाविर्भावरूपां सम्भूतिं निखिलकर्मविनाशरूपामसम्भूतिं चोपास्ते स तयोपास्यमानयाऽसम्भूत्यैश्वर्यकैवल्यात्मकं संसारं प्रकृतिसम्बन्धमतिलङ्घ्य सम्भूत्या ब्रह्म सर्वप्रकारेणानुभवतीति । एवं परिष्क्रियमाणेऽर्थे को दोष इति ।

सन्तु नामैवमन्यथा च परिष्कारस्य पन्थानः । तथाऽपि संपूर्वकस्य भूधातोरनात्मनेपदिनोऽपि प्राप्त्यर्थकत्वस्य दर्शितत्वात्, विद्याप्रकरण उपास्यत्वेनोक्तस्य सम्पूर्वकभूधात्वर्थस्य विद्यान्तरप्रकरण उपास्यत्वेन प्रसिद्धतदर्थ-

रूपत्वौचित्यादिनोपपन्नतरस्यार्थादेव कैवल्यैश्वर्यव्यावर्तनक्षमस्य साम्प्रदायिकस्यास्यार्थस्य प्रहाणमयुक्तमितीत्थमेवाचार्यपादा व्याचक्रुरिति सुस्थमेतत् ।

अत्र शङ्करभाष्ये सम्भूतिशब्द उत्पत्तिवाचकः सम्प्राति तद्वति हिरण्यगर्भे वर्तते । असम्भूतिशब्दस्तदन्यकारणभूताव्यक्तप्रधानपरः । विनाशशब्दो लयशक्तस्तद्वत्कार्यब्रह्महिरण्यगर्भपरः । तृतीयमन्त्रे सम्भूतीमित्यत्राकारप्रश्लेषः । तीर्त्वासम्भूत्येत्यत्रासम्भूत्येति पदच्छेदः । मृत्युतरणं हिरण्यगर्भोपासनेनाणिमाद्यैश्वर्यलाभादनैश्वर्यतरणम् । अमृतशब्दार्थः प्रकृत्युपासनजनितप्रकृतिलय इति व्याख्यातम् । अस्यातिवैयात्यमूलत्वादत्यन्तमुदासितुमपारयन्नाह अत्रेति । सृष्टिप्रलयादौत्यादिपदात्तत्तदर्थपर्यवसानभूतहिरण्यगर्भग्रहणम् । **विवक्षयेत्यादि** । विवक्षापूर्वकवचनस्येत्यर्थः । तथा च विवक्षायां वचने चौचित्यलवोऽपि नास्तीत्यर्थः । **विभागशब्देन** हिरण्यगर्भोपासनजनिताणिमाद्यैश्वर्यमेव विद्ययाऽमृतमश्नुत इति पूर्वत्रेव कस्मादमृतप्राप्तिरूपं न भवति । सांसारिकदुःखहान्या प्रकृतिलयस्यैव कथं न मृत्युतरणरूपत्वम् । उभयस्योभयशब्दार्थत्व एकतरशब्दप्रयोग एव कस्मान्न कृतः । उपासकद्वयस्य चेदिदं फलद्वयम्, एकस्य पुंस इत्थमेकदाऽवान्तरफलविभागवचनं कथं घटतामित्येवमर्थः स्फुटितः ॥ १४ ॥

अत्र यदुक्तं—सत्यशब्दस्य जीवापेक्षया परब्रह्मणि मुख्यत्वात् तद्वाचित्वमेव स्वीकर्तव्यम् । अर्थश्चैवम्—हिरण्मयेन पात्रेण चिदचिद्रूपभोग्यवर्गेण सत्यस्य ब्रह्मणो मुखं प्राप्तिद्वारं प्राप्तिहेतुभूतज्ञानमार्गरूपं सद्दर्शनमपिहितम् । सत्यधर्माय दृष्टये समीचीनपूर्वोक्तदर्शनाय सत्यशब्दवाच्यपरब्रह्मप्राप्तिसाधनधर्मभूताय वा दर्शनाय तद्दर्शनमपावृण्विति; तदप्याचार्यपादभाषितपरित्यागेनाभिनवार्थकल्पनाभिनिवेशविलसितमेव । अपिहितमित्यस्य ह्यदृश्यं कृतमिति वा निरुद्धवृत्तिकमिति वाऽर्थः । यथा चन्द्रमा

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत् त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ १५ ॥

---

**अथैवं फलपर्यन्तसाङ्गब्रह्मविद्यानिष्ठस्यानुसन्धेया मन्त्रा उपदिश्यन्ते। तेषु च पूषादिशब्दाः सर्ववाच्यं परमात्मानमनुसन्दधतां तत्तद्देवता-प्रणाड्या साक्षाद्वा तत्पर्यन्ताः । अत्र हि यमसूर्यादिशब्दानामेक-विषयत्वं स्वरसावगतं तथा सत्येवोपपद्यते । तत्र प्रथमेन मन्त्रेण पूषशब्दविवक्षितं भगवन्तं प्रति प्रस्तुतां समाधिप्रतिबन्धनिवृत्तिं प्रार्थयते हिरण्मयेन—दृष्टय इति । सत्यशब्दोऽत्र जीवपरः । 'स-त्यं चानृतं च सत्यमभवत्' 'अथ नामधेयं सत्यस्य सत्यं प्राणा वै स-त्यं तेषामेष सत्यम्' इत्यादिषु जीवेऽपि तत्प्रयोगात् । तस्य मुखं अनेकेन्द्रियावष्टम्भतया मुखवदवस्थितं मनः हिरण्मयेन पात्रेणा-पिहितम् रागात्मकतया हिरण्मयसदृशेन रजोमयेन पात्रेण परमा-त्मविषयवृत्तिप्रतिरोधकेन च्छादितम्। हृदि निहिते परमात्मविषये निरुद्धवृत्तिकमित्यर्थः । रजःकथनं तमसोऽप्युपलक्षणम् । हिरण्म-यशब्देन कर्माधीनभोग्यवर्गप्रदर्शनम् । तत् जीवस्य मुखस्थानीयं मनः । पूषन् आश्रितपोषणस्वभाव अपावृणु निरस्तापिधानं कुरु । कस्य हेतोः? सत्यधर्माय दृष्टये सत्यस्य जीवस्य धर्मभूताय पूर्वो-क्तब्रह्मानुभवदर्शनायेत्यर्थः ॥ १५ ॥**

---

अभ्रेण पिहितः, चक्षुः पिहितमित्यादि । इदं चादृश्यीकरणं निरुद्धवृ-त्तिकत्वं वा विद्यमानस्यैव वस्तुनो, नाविद्यमानस्य । यदि मुखशब्दस्य ब्रह्मद-र्शनं ब्रह्मसाक्षात्कारोऽर्थः, तर्हि स हिरण्मयपात्ररूपप्रतिबन्धकवशादनुत्पन्न इत्येव वक्तव्यमित्यपिहितशब्दोऽस्वरसः । यद्येवमर्थविवक्षा तर्हि सत्यमपि-हितमित्येतावदेवालमित्यन्यद्व्यर्थं च । तथा द्वितीयसत्यशब्दस्य समीची-नार्थकत्वे सम्भवदेकार्थत्यागो दोषः। यदि ब्रह्मप्राप्तिहेतुदर्शनपरं सत्यधर्माय दृष्टय इति पदद्वयम् , तदा तस्यार्थस्य सत्यस्य मुखमिति पदद्वयेन प्रागुक्त-तया तस्मा इत्येवालम् । अथ वा तुरीयः पाद एव व्यर्थः । तदपावृणुवि-त्यस्यैव पर्याप्तत्वात् । दर्शनाय दर्शनमपगततिरोधानं कुर्विति प्रयोगश्च न

पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह तेजः ।
यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषस्सोऽहमस्मि ॥ १६

---

**पुनरपि तया दृष्ट्या द्रष्टव्यं विशिंषन् दृष्ट्या गुणमभ्यर्थयते पूषन्नेकर्षे पश्यामीति । एकर्षे अद्वितीयातीन्द्रियद्रष्टः । यम सर्वान्तर्यामिन् । सूर्य स्वभक्तबुद्धीनां सुष्टु प्रेरक । प्राजापत्य प्रजापतिप्रसूतस्य सर्वस्यान्तर्यामिन् । अविवक्षितप्रत्ययार्थो वा प्राजापत्यशब्दः । प्रजानां पत इत्यर्थः । व्यूह रश्मीन् समूह तेजः स्वस्वरूपप्रकाशनोपयिकान् स्वोग्ररश्मीन् व्यपोह्य प्रभात्मकं च तेजः समूहीकुरु । यत्**

---

समञ्जसः । दृष्टय इत्यस्य दर्शनप्रवृत्तिसिद्धय इत्यर्थवर्णनमपि क्लिष्टम् । अस्माकं तु मनसो विद्यमानत्वात् तद्वृत्तिनिरोधस्यैव कृतत्वात्तस्यापिहितत्वमुपपन्नम् । निरस्तपिधानेन मनसा सम्पाद्यस्याभिधानाय च तुरीयपाद आवश्यकः । सत्यधर्मायेति च कर्माधीनविकारविरहितस्य जीवस्य यद्ब्रह्मदर्शनं तस्य स्वाभाविकत्वं स्वरूपानुरूपधर्मत्वं च दर्शयति । किञ्च मन्त्रेऽस्मिन्नप्रकृतोऽपि कश्चिदर्थः स्वरसतः प्रतीयते । यथा कश्चिदत्यर्थग्रहणलोलुपश्चक्षुषाऽपेक्षितवस्तुदर्शनस्य विलोपमपि सोढ्वा हिरण्मयेन पात्रेण स्वमुखापिधानमप्यादावनुमन्यते । पश्चादन्धवद्भावेनात्यन्तं खिन्नः प्रार्थयते 'पात्रमिदमपनीयतां अस्तु मे सहजं दर्शन' मिति । एवं दृष्टान्तभावेन निविष्टस्यार्थस्य वर्णनाय सत्यस्य मुखमिति कस्यचित्पुंसो मुखं ग्राह्यमिति तद्वद्दार्ष्टान्तिकेऽपि कस्यचिज्जीवस्य मनो ग्रहीतुं युक्तम् । तदैकार्थ्याय द्वितीयसत्यपदमपि जीवपरमेव । तस्मादिहाप्याचार्यपादभाष्यमेव ज्याय इति ॥ १५

**दृष्ट्या द्रष्टव्य**मिति । पूर्वश्लोकोक्ता दृष्टिर्दर्शनसमानाकारध्यानरूपा । तत्साध्यो यो वास्तवस्साक्षात्कारस्तद्विषय इहोच्यते । अर्थाच्च ध्यानविषयोऽपि स इति सिद्ध्यति । यदि साऽपि दृष्टिः साक्षात्काररूपैव, तर्हि द्रष्टव्यमित्यस्य विषयीकर्तव्यमित्यर्थः । **दृष्ट्या गुण**मिति । दृष्टेरुपयुक्तमित्यर्थः ।

आदित्यवर्णमित्यादिप्रसिद्धम् सर्वेभ्यः कल्याणेभ्योऽतिशयितकल्याणं शुभाश्रयभूतं ते दिव्यं रूपं तत् पश्यामि । अत्र वर्तमानव्यपदेशो उत्तरवाक्यवत् तात्कालिकानुसन्धानानुवादः । प्रार्थनाप्रकरणानुरोधे तु व्यत्ययेन पश्येयमिति लिङर्थो ग्राह्यः । ते इत्यस्य पुनरुक्तिस्तदसाधारण्यज्ञापनार्थम् । त्वदर्थं सदा पश्यामीति वा निरुपाधिकशेषत्वानुगुणोक्तिः । अथान्तरात्मनोऽहंग्रहेणानुसन्धानमाह योसावसौ पुरुषः सोऽहमस्मि इति । वीप्साऽत्यादरव्यञ्जनार्था । यद्वा 'योसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तस्सनातनः । सर्वभूतमयो

---

अत्र 'लिङर्थो ग्राह्य' इत्येतदनन्तरं 'इत्यपुनरुक्तिः तदसाधारण्यज्ञापनार्थं सदा पश्यामीति वा निरुपाधिकशेषत्वानुगुणोक्ति' रिति पाठो दृश्यते । स च न शुद्धः । अतो मूले ते इति पदद्वयश्रवणात् पुनरुक्तिरित्याशंक्य दिव्यमङ्गलविग्रहस्य तस्य भगवदसाधारण्यज्ञापनार्थमित्थम् । अथ वा त्वद्रूपं त्वदर्थं सदा पश्यामि । एतद्दर्शनजन्यं प्रधानं फलं तवैवेति शेषत्वानुगुणोक्तिरितितात्पर्यकः पाठो युक्त इति निर्वोशितः । अहंग्रहेणैकबुद्धिशब्दाभ्यां स्वात्मापृथक्सिद्धतयैव सर्वदा त्वामनुसन्दधानस्य मेऽत्यन्तपारतन्त्र्यं सुनिरूढम् । यत एवं त्वद्दर्शनमपि त्वदर्थमित्यध्यवस्यामीति सूचनाय प्रवृत्तमन्तिमं पादमवतारयति अथेति । यद्यप्यस्य वाक्यत्रयात्मत्वाङ्गीकारेणासावादित्यमण्डलान्तर्वर्ती योऽस्ति, असौ पुरुषः पुरुषसूक्तादिप्रसिद्धः सर्वत्र पुरि शयानः सर्वान्तर्यामी भवति; सोऽहमस्मीत्यर्थवर्णनेन द्वितीयवाक्योक्तार्थस्यैव विशेष उपसंहारस्तृतीयवाक्येन तत्त्वमसीत्यनेनेव क्रियत इति वक्तुं शक्यम् । अथापि सम्भवति वाक्यद्वयरूपत्वे वाक्यत्रयरूपत्वस्वीकारस्यायुक्तत्वात् माध्यन्दिनपाठे वाक्यद्वयस्यैव दर्शनाच्चान्यथैवाह वीप्सेति । माध्यन्दिनपाठे 'योसावादित्ये पुरुषः सोसावह'मिति यच्छब्देन तच्छब्देन च प्रत्येकमदश्शब्ददर्शनात् तदनुरोधेनादश्शब्दद्वयान्वयं समर्थयते यद्वेति । माध्यन्दिनपाठे तथाऽङ्गीकारेपीह यच्छब्दघटितवाक्यप्रविष्टस्यादश्शब्दस्य तच्छब्दघटितवाक्ये समाकर्षणमस्वरसमिति कृत्वाऽर्थभेदमाह सर्वेति । क्रमेणादश्शा-

ब्दद्वयेनातीन्द्रियत्वप्रमाणसिद्धत्वयोरुक्तिः । पूर्णत्वं 'तेनेदं पूर्णं पुरुषेण सर्वम्' इत्यत्र दर्शितम् । पूर्वसत्त्वं 'पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्व'मित्यत्र । आदिना—

'पूस्संज्ञे तु पुरे तस्मिन् शयनात् पुरुषो हरिः ।
शकारस्य षकारोऽयं व्यत्ययेन प्रयुज्यते ॥'

इति स्मृतं पुरिशयत्वं ग्राह्यम् ।

यत्त्विह स इत्यस्य ब्रह्मात्मक इत्यर्थ एव स्वीकार्यः । भगवद्रूपदर्शनस्य प्राक्प्रार्थिततयाऽत्र स्वस्य तच्छरीरत्वरूपतन्नियाम्यत्वप्रदर्शनेन तद्रूपदर्शनाधिकारस्यैव ज्ञापनीयत्वादिति ; तन्न ; तच्छरीरत्वमात्रस्य तद्रूपदर्शनाधिकारत्वासम्भवात् । सर्वेषां स्थावरतिर्यगादीनामपि तच्छरीरत्वस्य वस्तुतो विद्यमानत्वात् । अथ तन्नियाम्यत्वानुगुणवर्तनं सोऽस्मीति पदद्वयेन बोध्यत इति चेत् तदपि न । तन्नियाम्यतया भवनमेव हि तत्पदद्वयार्थः स्यात् । न तु तदनुगुणवर्तनमिति । अतो लक्षणयैव तादृशार्थो ग्राह्यः । तावताऽपि परविद्याद्यनुष्ठानमेव तदनुगुणवर्तनं भविष्यति । तदपेक्षयाऽस्मीत्युत्तमपुरुषबलावगतमहंशब्दार्थे स इति पदार्थाभेदानुसन्धानं गृहीत्वा अहं ब्रह्मेत्यनुसन्धानस्य मया क्रियमाणतयाऽहं यत्ते रूपं कल्याणतमं तत्ते पश्यामीति भाववर्णनं वरम् । न चाहमित्यस्य मदन्तर्यामीत्यर्थमुक्त्वा तस्योद्देश्यसमर्पकत्वं न सुवचं तथा पूर्वमनवगतत्वादिति वाच्यम् । अनुसन्धानस्यैवेदानीं क्रियमाणत्वेन ततः प्रागेव शास्त्रार्थश्रवणावश्यकतया तथा ज्ञातत्वोपपत्तेः । पुरुष इति पदेन सर्वान्तर्यामित्वस्य ज्ञातत्वाच्च । 'यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानत' इति प्रागुक्तत्वाच्च । अतस्तत्त्वमसीतिवदुपसंहाररूपेऽस्मिन् वाक्येऽहंशब्दस्यैव त्वंशब्दस्येव विशिष्टपरत्वं युक्तम् । अन्यथा हि अहं ब्रह्मशरीरभूत इत्युक्तौ परविद्यावत्त्वप्रदर्शनं न स्यात् । यस्मिन् सर्वा-

णि भूतान्यात्मैवाभूदिति ब्रह्मविशेष्यकपरविद्याया एवेह प्रागुक्तत्वात् । पञ्चाग्निविद्याया इव जीवविशेष्यकविद्यारूपत्वे प्रमाणाभावात् । तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासत इति वाक्ये पृथङ्निर्देशबलेन पञ्चाग्निविद्यातिरिक्तविद्यासामान्यस्य ब्रह्मविशेष्यकत्वावधारणेनात्र तद्बाधे प्रमाणाभावात् । न च नात्र परविद्यावत्त्वं प्रदर्श्यते अपि तु परविद्याङ्गभूतस्वात्मानुसन्धानमेवेति वाच्यम् । तथा सति स्वात्मानमनुसंहितवानस्मि । अतस्त्वद्रूपं मे प्रदर्शनीयमिति प्रार्थनस्याघटमानत्वात् । कथञ्चिद्धटनेऽपि तदपेक्षया मच्छरीरिणं त्वामनुसन्दधानोऽस्मि त्वद्रूपं दर्शयेत्यस्यैव सुलभत्वात् । अत एव योसावसौ पुरुषः जीवो यादृग्रूपः सोऽहमस्मि तादृग्रूपोऽहमस्मि तादृग्रूपतां विद्वानस्मीति व्याख्यानमपि नादृतम् । सर्वमिदं 'परविद्याङ्गभूतस्वात्मानुसन्धानपरत्वेऽपि' इति भाष्येण ध्वनितम् । अतो ब्रह्मशरीरत्वं स्वस्मिन्निह न विधेयम् । अपि तु पूर्वावगतस्वशरीरिब्रह्मानुसन्धानमेवेह ज्ञाप्यमिति अहंशब्द एव विशिष्टपरः । अन्यथा लक्षणाप्रसङ्गाच्च ।

यत्तु स इति भगवद्वाचिनस्तदात्मकपरत्वे लक्षणा नास्तीति, तदद्य विचारयामः । यद्यप्यद्वैतिनां इत्थमपि किञ्चिदुचितं मुखापिधानमिति नास्माभिरयं पक्षो बहिष्करणीयः ; अथापि परदूषणप्रसक्तिकुण्ठनाय तत्त्वस्थितिशोधनाय च विचारे व्याप्रियते ।

यदिह शरीरवाचिनां शब्दानां शरीरिबोधकत्वमिव शरीरिवाचिनां शरीरबोधकत्वमस्तीत्यभिधानम्, तत्किं सम्प्रदायप्रामाण्यादाहो साधकयुक्तिपुरस्कारादिति चिन्तनीयम् । नाद्यः ; तत्र किं

'ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् ।
एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति ॥

एकः समस्तं यदिहास्ति किञ्चित्तदच्युतो नास्ति परं ततोऽन्यत् ।
सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ॥

ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च ।
नद्यः समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य ॥'

इति विष्णुपुराणवचनार्थवर्णनपरं 'तच्च वासुदेवशरीरामिति तदात्मकम् ; जगदन्तर्गतं वस्तु विष्णोः कायतया विष्ण्वात्मक'मित्येवंरूपं भाष्यं प्रमाणम् । किं वा सर्वत्रप्रसिद्ध्यधिकरणभाष्यम् , यद्वा 'क्षेत्रज्ञं चापि मां विद्धी'ति गीताभाष्यम् , अन्यद्वा किञ्चित् । सर्वमपि प्रायः फलितार्थकथनरूपं न तत्र प्रमाणं भवितुमर्हति । विशिष्य चोच्यते ।

न तावदत्र प्रथमः ; सामानाधिकरण्यस्य शरीरात्मभावनिबन्धनत्वं पराशराभिसंहितं भाषित्वा तत्रत्यं तानि सर्वाणि तद्वपुरित्यादिशरीरात्मभावबोधकं वचनमुदाहृत्य किं भगवद्वाचिशब्दस्य तच्छरीरपर्यन्तबोधकत्वात् सामानाधिकरण्यमुपपद्यते, किं वा जगद्वाचिशब्दस्य शरीरिपर्यन्तबोधकत्वादिति शङ्कायां 'स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः' इति वचनमुदाहृत्य विश्वशरीरकत्वाद्विश्वतादात्म्यमिति विश्ववाचिशब्दस्यैव विश्वशरीरिपरत्वमित्यर्थं प्रदर्श्य तदिदमुक्तवचनोपपादितं तादात्म्यं ज्योतींषि विष्णुरित्यादिनोच्यत इति भाषितत्वाच्छरीरवाचिनामेवेहापि शरीरिपरत्वं सम्मतं निश्चीयत इति । ज्योतींषि विष्णुः—'यदस्ति यन्नास्ति च विप्रवर्ये'ति श्लोकेऽस्त्यात्मकनास्त्यात्मकचिदचिद्विशेषविशिष्टतादात्म्यस्य विष्णावुक्तत्वात्स वासुदेव इत्यत्रापि तच्छब्द एव जीवविशिष्टपरः । न च ज्योतिरादिपदानां पूर्वं विशिष्टपरत्वं नावगन्तुं शक्यमिति वाच्यम् । यदम्बु वैष्णवः कायस्ततो विप्रवसुन्धरेति विष्णुशरीरभूताम्बुजन्यत्वेन कृत्स्नस्य ब्रह्माण्डस्य विष्णुशरीरत्वावसायात् शरीरवाचिनां शरीरिपर्यन्तगामित्वस्य लोकसिद्धत्वात् पूर्वावग-

तस्यैवार्थस्य समानाधिकरणनिर्देशरूपेण भङ्ग्यन्तरेणोपबृंहणरूपेऽत्रानूद्यमानत्वस्य भाष्यकृत्सम्मतत्वात् । ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिर्न तु वस्तुभूत इति वाक्येनाशेषक्षेत्रज्ञशरीरकत्वस्य भगवति ज्ञातत्वेन प्राग्वदनुवादरूपत्वस्य स वासुदेव इत्यत्राव्याहतत्वाच्च । किं बहुना—जगत्परमात्मनोः शरीरात्मभावे प्रागप्रतिपन्न एव यद्वाक्यं प्रथममुपदिश्यमानम् , तत्रापि सदेव सोम्येदमग्र आसीदित्यादौ इदंशब्दः कार्यावस्थब्रह्मपर इति पदद्वयस्य समानाधिकरणस्थले ब्रह्मपर्यन्तत्वमेव भाष्यादिषु सुस्पष्टमुक्तमिति, का कथा यत्र मानान्तरप्रतिपन्नमनूद्यते । न चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञायास्तत्र कृताया उपपत्तिर्जगद्वाचिपदस्य ब्रह्मपर्यन्तत्वाभाव एकवस्तुप्रतिपादनाभावान्न भवतीति तथा भाष्यादावुक्तमिति वाच्यम् । प्रतिज्ञोपपत्तये वा स्यात् , अन्यथा सामानाधिकरण्यनिर्वाहासम्भवाद्वा ; सर्वथेदमादिपदानां विशिष्टब्रह्मपरत्वमुद्देश्यसमर्पकत्वं चेष्टमिति स न्यायः सर्वत्र भविष्यति । अन्यथा हि को भवानिति प्रश्नप्रतिवचनरूपे अहमेकः प्रथममासं वर्तामि भविष्यामि चेति रुद्रकर्तृकोपदेशे का गतिः ? तत्र ह्यहमिति पदं जीववाच्यपि ब्रह्मपर्यन्तमेव स्वीकर्तव्यम् । न चेदं प्रतिपाद्यानां प्रागेव ज्ञातमिति कथमुपदेशो घटताम् ? प्रतिपाद्यानां तद्ज्ञानाभावेऽपि प्रतिपादयितुर्ज्ञातत्वेन सर्वस्य पदस्य ब्रह्मपर्यन्तत्वशिक्षणाय तथा गूढोपदेशे कृते कथमिदमिति बुभुत्सवः प्रतिपाद्याः पश्चाद्विवरणेन वा वाक्यान्तरबलेन वा भोत्स्यन्त इति नानुपपन्नमिति चेत् तर्हि स एव प्रकारः सर्वत्र सुवच इति वृथैव शरीरिवाचिनां शरीरपर्यन्तत्वकल्पनमिति ।

यच्चेह 'सोहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्' इत्युदाहृत्य 'चेतनाचेतनवाचिशब्दानां परमात्मवाचिशब्दैश्च' इति बहुवचननिर्देशेन स इति पदानामच्युतार्थकत्वाध्यवसानम्, तत् 'सोऽहं स च त्वमिति

सर्वात्मनां पूर्वोक्तं ज्ञानाकारं तच्छब्देन परामृश्य तत्सामानाधिकरण्येनाहं त्वमित्यादीनां ज्ञानमेवाकार इत्युपसंहरन् देवाद्याकारभेदेनात्मसु भेदमोहं परित्यजेत्याह' इति भाष्यविरुद्धमित्यवधेयम् ।

न द्वितीयः ; तत्रापि सर्वं खल्विदं ब्रह्मेत्यत्र ब्रह्मशब्दस्य ब्रह्मात्मकरूपार्थैकान्तता नैव लक्ष्यते । प्रत्युत सर्वशब्दस्य ब्रह्मपर्यन्तत्वाभिसन्धिरेव भाष्यकृतां स्वीकर्तव्यो भवति । तथा हि—यदि सर्वशब्दस्य चिदचिन्मात्रपरतया ब्रह्मशब्दस्य ब्रह्मात्मकपरत्वं स्यात्, तज्जलानिति तच्छब्दोऽपि ब्रह्मात्मकमेव ब्रूयादित्यनन्वितार्थता । किं च तज्जलानिति हेतुनिर्देशेन हि सर्वब्रह्मपदार्थयोरैक्यं कार्यकारणभावनिबन्धनं शरीरात्मभावनिबन्धनं चेत्यवगम्यते । कार्यत्वं कारणत्वं च विशिष्टस्य ब्रह्मण एवेति सुनिरूढम् । अतस्तन्निबन्धनैक्यवर्णनाय सर्वपदं विशिष्टपरं स्वीकर्तव्यमिति शरीरात्मभावनिबन्धनमैक्यमपि तथैवोपपादनीयमिति कथमत्रान्यथावर्णनसम्भवः । अपि च सर्वं खल्विदं ब्रह्म तज्जलानितीत्यस्यानुवादरूपत्वात् पुरोवादभूते सदेव सोम्येदमित्यादौ यथा सामानाधिकरण्यं निरवाह्यत, तथैव निर्वाह्यमिति न ब्रह्म शब्दो ब्रह्मात्मकपरः । भाष्ये च 'अत्रैवोपासनं विधीयते, सर्वात्मकं ब्रह्म शान्तः सन्नुपासीते'ति, 'अतः सर्वप्रकारं सर्वशरीरं ब्रह्म शान्तो भूत्वोपासीते'ति, परं ब्रह्म हि कारणावस्थं कार्यावस्थं सूक्ष्मस्थूलचिदचिद्वस्तुशरीरतया सर्वदा सर्वात्मभूत'मिति च सर्वपदस्यैव विशिष्टपरत्वमवसीयते । श्रुतप्रकाशिकायाञ्च 'आकृत्यधिकरणन्यायेन प्रकारिपर्यन्ताभिधानसिद्ध्यर्थमाह सर्वप्रकारमितीत्यवतारितम् । वृत्तिकृतश्च सर्वं खल्विति सर्वात्मा ब्रह्मेश इति व्याचक्षाणाः सर्वशब्दं विशिष्टपरं दर्शयन्ति । जिज्ञासाधिकरणे च **तत्त्वमसि विचारघट्टे श्रुतप्रकाशिकायां** 'अतः सर्वशब्दः कार्यावस्थचिदचिच्छरीरकपरमात्मपरः—ब्रह्मशब्दः कारणावस्थाचिदचिद्विशिष्टपरः । एवमुभ-

यावस्थचिदचित्प्रकारिणो ब्रह्मण एकत्वं सामानाधिकरण्यप्रतिपाद्यमिति कार्य-कारणावस्थप्रकार्यैकत्वमस्य वाक्यस्यार्थ' इति विस्पष्टमुक्तम् ।

न च तृतीयः ; तत्र मां विद्धि मदात्मकं विद्धीति भाष्यस्य फलितकथनरूपत्वात् । अन्यथा 'यथा क्षेत्रं क्षेत्रज्ञविशेषणैतकस्वभावतया तदपृथक्सिद्धेस्तत्सामानाधिकरण्येनैव निर्देश्यम् । तथा क्षेत्रं क्षेत्रज्ञं च मद्विशेषणैतकस्वभावतया मदपृथक्सिद्धेर्मत्सामानाधिकरण्येनैव निर्देश्ये विद्धी'ति भवदुपात्तोपरितनभाष्यमेव न सङ्गच्छते । अत्र हि विशेषणतापदनिर्देशबलात् विशेष्यत्वाभावः स्पष्टः । एवं दृष्टान्ततयोक्तं क्षेत्रस्य क्षेत्रज्ञसामानाधिकरण्यं हि देवोऽहं मनुष्योऽहमित्यादिरूपम् । तत्र च नाहंपदस्य जीवशरीरपरत्वं युक्तम् । देवादिशब्दानां पिण्डविशिष्टात्मपर्यन्तताया एव बहुशो भाषितत्वात् । देहात्मकाविवेकशालिनां देवादिपदादेव विशिष्टप्रतीतिसम्भवात् । अहंशब्दस्यान्यस्य वा कस्यचिदात्मवाचिशब्दस्य शरीरपर्यन्ततया कुत्रापि प्रयोगादर्शनात् । अस्य भाष्यस्य पूर्वश्लोकभाष्यभाषितार्थदृष्टान्तदर्शनपरतया पूर्वश्लोकभाष्ये 'सामानाधिकरण्येन प्रतीतिस्तु वस्तुनः शरीरगोत्वादिवदात्मविशेषणैतकस्वभावतया तदपृथक्सिद्धेरुपपन्नेति भाषितत्वात् क्षेत्रवाचिन एव विशिष्टपरताया अवगम्यमानत्वात् । अन्यथा गोशुक्लादिशब्दानां गोत्वशौक्ल्यादिप्रकारमुखेन प्रकारिपर्यन्ततावत् क्षेत्रशब्दस्यापि प्रकारिपर्यन्ततेति व्युत्पादनार्थप्रवृत्तगोत्वादिवदितिदृष्टान्तवचनासाङ्गत्यप्रसङ्गात् । अहंशब्दस्यात्मशरीरपर्यन्तार्थं स्वीकृत्य देवादिशब्दस्य शरीरमात्रवाचित्ववर्णनाभिनिवेशे 'देवोऽहं मनुष्योहं घटादिकं जानामी'ति तत्रत्यभाष्यदर्शितज्ञानाधाराहमर्थबोधकवचनार्थवर्णनासम्भवाच्च । अतो दृष्टान्ते प्रकारवाचिनः प्रकारिपर्यन्तगमनमेवेष्टमिति दार्ष्टान्तिकेऽपि तथैवेति क्षेत्रज्ञ एव विशिष्टपरः । उपरि चात्र श्लोके परमतं निराकृत्य 'सर्वे वाचकाः

शब्दा अचिज्जीवविशिष्टपरमात्मन एव वाचकाः' इत्येव भाषितमिति नेदं शरीरिवाचिनः शरीरपर्यन्तत्वे प्रमाणमिति । एवमन्यत्रापि भाव्यम् । साधकप्रमाणाभावश्च भवदुक्तकृत्स्नपरिशोधनेनैव दर्शितो भवति । वक्ष्यते च ।

यदपि चिदचिद्वाचिशब्दानामपृथक्सिद्धिसम्बन्धेन चिदचिद्विशिष्टपरमात्मपरत्वमिव परमात्मवाचिनामपि तेनैव सम्बन्धेन तद्विशिष्टचिदचिद्वाचित्वं नामरूपव्याकरणश्रुतिलभ्यमिति ; तदप्ययुक्तम् । अपृथक्सिद्धिसम्बन्धस्य परमात्मनिरूपिताधेयतायाश्चिदचितोः प्रामाणिकतया चितमचितं च प्रति वृत्तिनियामकसम्बन्धरूपत्वेऽपि परमात्मनश्चिदचिन्निरूपिताधेयताया अप्रामाणिकतया तं प्रति वृत्त्यनियामकत्वात् वृत्त्यनियामकसम्बन्धेन वैशिष्ट्यस्य च स्वारसिकानुभवविरुद्धत्वात परमात्मवाचिनां तद्विशिष्टजगत्परत्वकथनस्य सहृदयैः स्वीकर्तुमशक्यत्वात् ।

यदपि 'इत्थं च नद्यः समुद्रान्तःप्रविष्टाः समुद्र एव भवन्ति । पल्लवपुष्पफलशाखादिकं सर्वं वृक्ष एवेत्यादयः स्वारसिकनिर्देशा अपि मुख्यतयैव निरूढा भवन्ती'ति ; तत्र कः पुनरित्थं चेति शब्दार्थः ? किं शरीरिवाचिनोऽपि शरीरपर्यन्तत्वसिद्धाविति, किं वा तद्वाचिशब्दस्य तदपृथक्स्थितवाचित्वसिद्धाविति ; न द्वयमपि युक्तम् ; नदीजलं समुद्रशरीरत्वस्य समुद्रापृथक्स्थितत्वस्य चाभावात् । समुद्रस्याचेतनत्वात् । नदीजलस्य पूर्वं पृथक्स्थितत्वात् , पश्चादपि पवनवेगपरिक्षिप्यमाणतया ग्रीष्मातपशोष्यमाणतया च पृथक्स्थितत्वात् । मुख्यतया निर्वाहस्तु अस्मत्पक्ष एव स्थलविशेषपरिच्छिन्नजलवाचित्वात् समुद्रपदस्य, तत्त्वस्य च नदीजलेऽपि सम्प्रत्यनपायादुपपन्नः । मास्तु वा मुख्यतया निर्वाहः ; यदि समुद्रपदं विलक्षणजलसमुदायवचनं स्यात् । ननु समुद्रपदस्य समुदायवचनत्वान्नदीजलस्य च तत्र घटकत्वात् घटकघटितयोरपि सामानाधिकरण्याङ्गीकारान्मु-

ख्यतयैव निर्वाह इति चेत् तावतेत्थं चेति शब्दस्य कस्तावदर्थ इष्टो भवति ? समुदायवचनस्य घटकवाचित्वसिद्धाविति चेन्नायमर्थः प्रकृतः । प्राक् समनन्तरं वास्यानुपपादितत्वात् । ईदृशानिर्वाहस्य मुख्यत्वासम्भवश्च वक्ष्यते । अनेन वृक्षोदाहरणमपि व्युदस्तम् । अतो वाक्यमिदमिह न सम्बद्धार्थकमिति ।

यत्तु अहं स पुरुषोऽस्मीत्यत्र पुरुषपदस्य पुरुषात्मकपरत्वे स इति पदार्थस्य पुरुषपदार्थैकदेशे पुरुषे कथमन्वयः ? पदार्थः पदार्थेनान्वेति न तु तदेकदेशेनेत्याशंक्य शब्दान्तरप्रयोज्यप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति शब्दान्तरप्रयोज्यप्रकारताभिन्नविशेष्यतासम्बन्धेनोपस्थितिः कारणमित्यत्र प्रकारतायामपृथक्सिद्धिसम्बन्धानवच्छिन्नत्वं निवेशनीयम् । अन्यथा गौरश्चैत्रो जानातीत्यादौ चैत्रादिपदार्थैकदेशे शरीरे गौराद्यन्वयानापत्तेः । प्रकृते च पुरुषपदस्यापृथक्सिद्धिसम्बन्धेन पुरुषविशिष्ट इत्यर्थकतया तत्सम्बन्धानवच्छिन्नप्रकारताभिन्नापुरुषनिष्ठविशेष्यतेति न दोष इत्युक्तम् ; तत्रेदं वक्तव्यम् । यद्येवमपृथक्सिद्धिसम्बन्धानवच्छिन्नत्वं निवेश्यते , तर्हि नित्या गौरित्यादौ गोत्वे नित्यत्वान्वयापत्तिः । गौरत्वं रूपवान् जानातीत्यादौ रूपेऽभेदेन गौरत्वान्वयप्रसङ्गः । अतोऽपृथक्सिद्धिसम्बन्धानवच्छिन्नत्वमनिवेश्य गौरश्चैत्रो जानातीत्यादौ गौरो जानातीत्यत्रेव गौरपदस्य रूपविशिष्टपिण्डविशिष्टात्मपर्यन्तत्वमेव स्वीकृत्य गौरपदार्थस्य विशिष्टस्य चैत्रपदार्थेन विशिष्टेनाभेदमेवोक्त्वा विशिष्टयोरभेदस्थलेऽसति बाधके विशेषणयोरप्यभेदान्वयव्युत्पत्तिमङ्गीकृत्य चैत्रशरीरस्य गौरत्वं निर्वाह्यमिति । अत एव 'अयमात्मा ब्रह्म'त्यत्रायंशब्दस्यापि विशिष्टपरत्वं '**प्रकाशादिवत्तु नैवं परः**' इत्यत्र भाषितम् । यत्राप्येवं विशिष्टवेषेण परमात्मपर्यन्तता विशेषणवाचिनः शब्दस्य न सम्भवति, तत्रापि तस्य विशेषणस्य प्रकारमा-

त्वगतत्वे प्रामाणिकेऽपि यथावत् प्रथमतः समभिव्याहृतपदोपात्ते प्रकारविशिष्ट एवान्वयः । पश्चात् तु सविशेषणे हीति न्यायेन विवेचनेन प्रकारे पर्यवसानसम्पादनमिति नानुपपत्तिरिति ।

यश्च शरीरवाचिनां शरीरविषयकवृत्तिज्ञानपूर्वकमेव शरीर्युपस्थापकत्वमिति, पूर्वं जायमाने वृत्तिज्ञाने शरीरस्य शरीरिणश्च यथाक्रमं विशेष्यत्वात् तस्य पदार्थत्वानपायात् गौरश्चैत्रो जानाति, अहं स पुरुषोऽस्मीत्यत्र च न 'पदार्थः पदार्थेनान्वेती'ति नियमभङ्ग इति वास्तविकः पक्षः ; सोऽप्ययुक्तः । एकसामग्रीवेद्येषु वस्तुषु प्रथमतः प्रकारोपस्थापनं पश्चात् प्रकारिण इति निर्बन्धस्य निर्निबन्धनत्वात् । अत एव भाष्यकृद्भिः नैयायिकमतनिर्विकल्पकनिरासे चक्षुरादिसामग्र्या युगपदेव जात्यादिविशिष्टव्यक्तिप्रत्यक्षमुपापादि । अतः प्रत्यक्ष इव शब्देऽपि युगपदेव विशिष्टोपस्थितिरिति न विशेषणोपस्थितेः प्राग्भावित्वमस्माकमिष्टम् । नागृहीतविशेषणाबुद्धिर्विशिष्टे प्रवर्तत इति विशेषणबुद्धेः प्राग्भावितां जात्या व्यक्त्याक्षेपवादिन एव ब्रुवते । वयं तु विशिष्टबुद्धिर्विशेषणविषयिण्येव भवतीत्येव ब्रुवन्तो विशिष्टे शक्तिमेव स्वीकृत्याक्षेपपक्षमाक्षिपामः । शरीरवाचिनः शब्दाः शरीरिपर्यन्तवाचिन इति वाक्यस्य च ये परबुद्ध्या शरीरवचनास्तेऽस्मद्बुद्ध्या विशिष्टवचना इत्येवार्थः । तथा च **जिज्ञासाधिकरणभाष्यम्**, 'आत्मप्रकारतया प्रतिपादनसमर्थस्तु शब्दः सहैव प्रकारतया प्रतिपादयती'ति ।

यदप्यत एव गभीरायां नद्यां घोष इत्यादौ पश्चाल्लक्षणया तीरोपस्थितावपि पूर्वोपस्थितनद्यां गभीरपदार्थान्वयः सङ्गच्छत इति ; तदपि न युक्तम् । युगपत् वृत्तिद्वयविरोधात् प्राथमिकशक्यार्थोपस्थितेर्लक्षणाकल्पनोपक्षीणत्वेन शाब्दबोधप्रयोजकत्वायोगात् । अन्यथा गभीरायां नदीवर्तिघोषः ऋद्धस्य राजमातङ्ग इत्यादिप्रयोगप्रसङ्गाच्च । तत्रापि प्रथमतो मुख्यविशे-

ष्यतयोपस्थितनदीराजादौ गभीरत्वद्धादेरभेदेनान्वयस्य सुवचत्वात् । अतो गभीरायामित्यस्य तात्पर्यग्राहकत्वं वा बोध्यसम्बन्धरूपलक्षणा वा समाश्रयणीयमित्यन्यदेतत् ।

यदप्यहं स पुरुषोऽस्मीत्यत्रैकदेशान्वयदोषपरिहाराय पुरुषपदार्थस्य भगवतोऽहंशब्दार्थे जीवे तदन्तर्यामित्वलक्षणतादात्म्येनान्वयवर्णनम् ; 'सर्वत्र च सर्वं खल्विदं ब्रह्म,' 'क्षेत्रज्ञं चापि मां विद्धि,' 'विश्वमेवेदं पुरुषः' इत्यादावीदृशतादात्म्येनान्वय एव भाष्यकृदभिप्रेत इत्यभिधानं च, तदत्यन्तमन्दम् । भाष्यकृद्भिः स्वरूपैक्यलक्षणतादात्म्यस्यैव सामानाधिकरण्यनिबन्धनतायाः सनिर्भरं साधितत्वेन स्वाभिप्रायस्य तेष्वारोपणस्यात्यन्तमयुक्तत्वात् । अन्यथा तत्त्वमसीत्यादावत्यन्तभिन्नयोर्जीवपरमात्मनोः कथं समानाधिकरणपदनिर्देश्यत्वमित्याशंक्योद्देश्योपादेयभावासम्भवशङ्कापादकमन्यादृशसमाधानं न परिगृह्णीयुः । प्रतर्दनविद्यायां च 'मामेवायुरमृतमित्युपास्स्वे'त्यत्र मामित्यस्येन्द्रमात्रपरत्वाङ्गीकारेण परब्रह्मणस्तदन्तर्यामिकत्वलक्षणतादात्म्येनान्वयमेवाभिदध्युः । प्रतर्दनेन पूर्वमिन्द्रान्तर्यामित्वस्य ब्रह्मण्यनवगततया तथैवोद्देश्योपादेयभावौचित्यात् लाघवाच्च । न च तथा भाष्यकृद्भिरभिहितम् । 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' इति सूत्रे जीवात्मवाचिनामहंत्वमादिशब्दानामपि परमात्मन्येव पर्यवसानं ज्ञात्वा—स्वात्मशरीरकं परमात्मानमेवोपास्यत्वेनोपदिदेशेति शरीरवाचिनः शरीरिपर्यन्तत्वाङ्गीकारेण सामानाधिकरण्यनिर्वाहस्यैव विहितत्वात् । सूत्रकृतश्च वामदेववदिति दृष्टान्तयन्तः यथा 'अहं मनुरभवमित्यादावहमादिशब्दानां विशिष्टवाचित्वं तथा प्रतर्दनविद्यादिष्वपी'ति सर्वत्र विशिष्टवचनतामेव विस्पष्टयन्ति । अहं मनुरभवमित्यादौ विशिष्टवचनतैव शरणामिति भवतैवोक्तम् । अत एवात्रैव भाष्ये--

'सर्वगत्वादनन्तस्य स एवाहमवस्थितः ।
मत्तः सर्वमहं सर्वं मयि सर्वं सनातने ॥ '

ऽचिन्त्यस्स एष स्वयमुद्बभौ' इत्यादिवाक्यच्छायया यत्तच्छब्दाभ्याम-दःशब्दौ विभज्यान्वेतव्यौ, सर्वातीन्द्रियप्रमाणसिद्धत्वद्योतनार्थौ वा । पुरुषः पूर्णत्वपूर्वसत्त्वादिगुणक आदित्यवर्णविग्रहाविशिष्टस्सर्ववेदप-ठितानन्यपरपुरुषसूक्तादिप्रसिद्धो महापुरुषः । सोऽहमस्मि अहंशब्दो ऽत्र जीवद्वारा तदन्तरात्मपर्यन्तः । अत एवास्मीत्यपि प्रत्यग्रूपस्व-विशिष्टे परमात्मनि विश्राम्यति । 'अस्मद्युत्तम' इत्येतावदेव ह्यनुशि-ष्टम् । न पुनरस्मच्छब्दस्य प्रत्यगात्मद्वारा परमात्मपर्यन्ततायामुत्त-मानिवृत्तिः । एवं तत्त्वमसीत्यादिष्वासिशब्दो निर्वाह्यः । तत्रापि 'युष्म-द्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' इत्येतावदेव हि स्मर्य-ते । न तु युष्मच्छब्दस्य स्वाभिमुखचेतनद्वारा तदन्तर्यामिपर्यन्त-त्वे मध्यमनिवृत्तिः । लोके तु अहं त्वमसि, त्वमहमसीत्याद्युपचारे-षूद्देश्यानुसारेण मध्यमोत्तमयोर्व्यवस्था । तद्वदत्रापि व्यवस्थोपप-द्यते ; उद्देश्यविषययोरेवात्र युष्मदस्मच्छब्दयोरुपपदत्वेन सूत्रपदा-भिप्रेतत्वात् । भाष्ये तु तत्त्वमसिनिरूपणावसरे 'नात्र किंचिदुद्दि-श्य किमपि विधीयत' इत्युक्तिरप्राप्तांशनिषेधाभिप्राया व्यक्ता , उप-संहारत्वोपपादनात् ।

---

इति प्रह्लादवचनमुदाहरन्तो भाष्यकृतः तत्रापि वचने विशिष्टपरतामेवाऽऽक-लयन्तीति तद्विरुद्धमेव भवतः स एवाहमित्यत्र स इति पदार्थस्य विलक्षण-तादात्म्येनान्वयवर्णनम् । 'मत्तः सर्वमहं सर्व'मित्युत्तरार्धेऽस्मच्छब्दस्य वि-शिष्टपरत्वावश्यकत्वेन पूर्वार्धेऽन्यथाकरणस्यायुक्तत्वाच्च । भवदुपात्तासु भाष्य-सूक्तिषु न काऽप्यभिमतं साधयति । कुत्रापि तादृशतादात्म्यस्य सम्बन्ध-रूपताया अनुक्तत्वात् । अहिकुण्डलाधिकरणभाष्ये च विशिष्टवस्त्वेकदे-शत्वेनेति पदेन पदस्य विशिष्टवाचित्वं द्योतितमेव । अपि चास्य भाष्यस्यां-शाधिकरणभाष्यसंग्रहरूपत्वात् तत्र च 'प्रकाशादिवत्तु नैवं परः' इति सूत्रे "अभेदनिर्देशास्तु पृथक्सिद्ध्यनर्हविशेषणानां विशेष्यपर्यन्तत्वमाश्रित्य मुख्य-त्वेनोपपद्यन्ते । 'तत्त्वमसि' 'अयमात्मा ब्रह्मे'त्यादिषु तच्छब्दब्रह्मशब्दवत् त्वमयमात्मेति शब्दानामपि जीवशरीरकब्रह्मवाचकत्वेनैकार्थाभिधायकत्वा-

ये पुनस्तत्त्वमसि, सोऽहमस्मीत्यादिषु कार्यकारणोपाध्याकार-विधूननेन निर्विशेषस्वरूपैक्यं वाक्यवेद्यमाहुः, तेषामसिवदस्मिरपि खण्डकः । श्रोतर्यनुसन्धातरि च युष्मदस्मदी हि परित्यक्ते । न ह्यसिना कश्चित्प्रतिबोधनीयः; न च कश्चिदस्मिना विशिष्यानुसन्धेयः । विधूननीयोपाधिविषयव्युत्पत्तिमच्छब्दसन्निधिमात्रोपजीवनेन क्वचिन्मध्यमोत्तमसम्पत्तिरिति चेत्—ततो वरमपरित्यक्तप्रवृत्तिनिमित्तमस्माकं निर्वहणमनुसर्तुम् । सन्मात्रस्यांशिनोऽशद्वयविशिष्टताप्रतिपादनं वदतामपि, सन्मात्रविवक्षायामत्र वाक्ये त्वमहम्भावायोगात्, त्वंताऽहन्ताविशिष्टं सदिति विशिष्टविवक्षायामपि प्रथमपुरुषोपनिपातप्रसङ्गात्, दृश्ययोश्च युष्मदस्मदर्थयोर्मृत्पिण्डांशे मणिक इव घटशरावाकारयोः सदंशभूतेश्वराकारेऽपि समन्वयायोगात्, त्वमहमर्थयोः सत्ताद्याकारस्य नित्यप्रतिपन्नतया विशेषतोऽनिर्देश्यत्वादननुसन्धेयत्वाच्च न कथंचिदपि तत्त्वमसि सोऽहमस्मीत्यादेर्निर्वाहः शक्यः । दृष्टिविधिस्तु मोक्षार्थविद्यासु वेदान्तवेदिना नाङ्गीक्रियते । यद्यप्यत्र 'त्वं राजाऽसि, अहं राजाऽस्मी' त्यादिवत् तादधीन्याद्युपचारविवक्षया मध्यमोत्तमयोः सामञ्जस्यम्; तथाऽपि लोकवेदयोः चेतनपर्यन्तदेवमनुष्यादिव्यवहारन्यायेन जातिगुणशब्दगतिलाभात्तदुपेक्षा । नन्वेवं पुरुषाख्यस्वेतरात्मसामानाधिकरण्यक्लेशं परित्यज्य 'योसावसौ पुरुषः सोऽहमस्मी' ति परिशुद्धस्वरूपमात्रानुसन्धानपरमिदं वाक्यमस्तु; मैवम्, तत्त्वमसि, त्वं वा अहमस्मि इत्यादिषु तदनुपपत्तेरत्रापि तत्समानन्यायतया तथैवाऽनुसन्धानस्यौचित्यात् । ब्रह्मात्मकोऽहमस्मि इति पराविद्याङ्गभूतस्वात्मानुसन्धानपरत्वेऽपि तच्छब्देन तादधीन्यादिकं लक्षणीयं स्यात् ॥ १६ ॥

---

दि"ति विस्पष्टं विशिष्टवचनत्वस्य भाषितत्वात् स्वरूपैक्यलक्षणं तादात्म्यमेव सामानाधिकरण्ये निबन्धनमिति दर्शितत्वाद्भवदभिमतबाधकत्वमेव ।

कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया च तदात्मकत्वेनैक्यादिति जिज्ञासाधिकरणभाष्येऽपि ब्रह्मकार्यतया प्रयोज्यस्यैक्यस्य स्वरूपै-

'त्तदन्तर्यामिकत्वनिबन्धनमैक्यमपि समानाधिकरणपदद्वयस्य विशि-

ष्टपरतया स्वरूपैक्यरूपमेवोचितम् । अस्य भाष्यस्य श्रुतप्रकाशिकायामपृथक्सिद्धत्वरूपैक्यपरतया योजनान्तरस्य कृतत्वेऽपि न समानाधिकरणवाक्येषु तादृशतादात्म्यस्य सम्बन्धतागमकत्वम् । समानाधिकरणस्थले विशिष्टपरत्वव्युत्पादकभाष्यविरोधात् ।

'तदिदं शरीरात्मभावायत्तं तादात्म्यं सामानाधिकरण्येन व्यपदिश्यत' इति पुराणघट्टभाष्येऽपि शरीरात्मभावरूपमित्यभाषित्वा आयत्तमिति भाषणात्तदतिरिक्तं शरीरात्मभावप्रयुक्तविशिष्टवाचित्वनिबन्धनं स्वरूपैक्यलक्षणतादात्म्यमेव विवक्षितमवगम्यते ।

अंशाधिकरणे च जीवस्य ब्रह्मांशत्व ऐक्यनिर्देशस्य हेतुत्वाभिधानं वा ऐक्यनिर्देशस्य तत्त्वमसीत्यादिरूपत्वाभिधानं वा जीवोयं ब्रह्मणोंश इत्युक्तिर्वा कथं तादृशतादात्म्यं संबन्धं बोधयतीति न विद्मः । तदधिकरणभाष्य एव विशिष्टवचनत्वकण्ठोक्तेः प्राग्दर्शितत्वात् ।

'तमः परे देव एकीभवती'ति श्रुत्या पृथक्सिद्ध्यनर्हसंबन्धविशेषस्यैकत्वरूपत्वकथनमपि न युज्यते । भवदभिमतस्यापृथक्सिद्धत्वरूपैकत्वस्य तमसि तत्कार्यप्रपञ्चे च परं देवं प्रति सर्वदैव वक्तव्यत्वेन प्रलयदशावर्णितस्यैकीभावस्य भवदभिमतस्य चैकरूपत्वाभावात् । तत्र श्रुत एकीभावस्तु अयःपिण्डसंपृक्तजलस्येव पूर्ववत्स्पष्टोपलम्भावस्थाप्रहाणेनात्यन्तसूक्ष्मावस्थान्तरापत्त्या देवे संबध्यमानत्वरूप इत्यन्यत्र द्रष्टव्यम् ।

अविभागेन दृष्टत्वाधिकरणभाष्येऽपि स्वयमेव विशिष्टपरतया स्थापितानां तत्त्वमसीत्यादीनामुपादानाद्विशिष्टवाचित्वस्थापकस्य 'अवस्थितेरिति काशकृत्स्नः' इति सूत्रस्य धरणात् तत्प्रकारभूतमिति जीवस्य प्रकारताया ब्रह्मणः प्रकारितायाश्च कथनेन विशिष्टवाचित्वबोधनाच्चाहं ब्रह्मासीत्यहंशब्दस्य विशिष्टपरत्वमेवाभिमतं लक्ष्यत इति न किञ्चिदनुकूलम् ।

यत्तु भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमित्यत्रैकशब्दार्थ एकत्वमपृथक्सिद्धत्वरूपमपीति; तन्न; स्वरूपैक्यलक्षणैकत्वस्यैव भाष्यादिषु प्रपञ्चितत्वात् । भिन्नप्रवृत्तिनिमित्तानामित्यत्र भिन्नपदस्यान्योन्याभावरूपभेदवदर्थकत्वेनैकशब्दस्य तादृशभेदराहित्यरूपस्वरूपैक्यवदर्थकत्वस्यैव वक्तव्यत्वात् । पृथक्सिद्धत्वरूपभेदस्य चात्राविवक्षितत्वात् । ज्ञानी स्वयंप्रकाशः घटवद्द्रव्यमित्यादौ ज्ञानस्वयंप्रकाशत्वघटद्रव्यत्वादिरूपप्रवृत्तिनिमित्तपृथक्सिद्ध्यभावेन सामानाधिकरण्याभावप्रसङ्गेन तस्य विवक्षितुमशक्यत्वाच्च । तेन शब्देन तस्य शब्दस्य सामानाधिकरण्यं नाम तच्छब्दप्रयोज्यविषयतानिरूपिताभेदनिष्ठसंसर्गतानिरूपितविषयताप्रयोजकत्वमेव । अत्र चाभेदः स्वरूपैक्यमेव । अपृथक्सिद्धत्वस्याप्यभेदपदार्थत्वे आत्मनि ज्ञानं परमात्मनि जगत्, जगति परमात्मेत्यादावपृथक्सिद्धत्वस्यैव सप्तम्यर्थत्वेन सामानाधिकरण्यव्यवहारप्रसङ्गात् । शंखं पीतं जानातीत्यादिनिर्वाहाय च न स्वरूपैक्यातिरिक्तमेकत्वं ग्राह्यम् । तत्र शंखविशेष्यकपीतप्रकारकज्ञानाश्रय इति बोधे सत्यपि अहं स पुरुषोऽस्मीत्यादावस्मीत्यनेनान्वितपुरुषपदार्थस्याहमित्यनेनाप्यन्वयस्य भवदिष्टतया तथैव रीत्या शंखपीतपदयोर्मिथोऽन्वयमप्यङ्गीकृत्य शंखपीतपदयोरभेदसम्बन्धावगाहिबोधस्याप्यङ्गीकारात् । न चैवमपीते शंखे पीतबोधजननाद्वाक्याप्रामाण्यप्रसङ्गः । परकीयभ्रमज्ञानबुबोधयिषापूर्वं प्रयुक्तत्वेन तद्बोधनेन च प्रामाण्यस्यानिवार्यत्वात् । अपीते पीतज्ञानं तु शब्दातिरिक्तप्रमाणादिव शब्दादपि भ्रान्तस्य भ्रमरूपमभ्रान्तस्य चाहार्यरूपमिष्यते । न चाहार्यः शाब्दबोधो नास्तीति शंक्यम्, वैयाकरणादिभिस्तदभ्युपगमात् । मास्तु वा तत्र सामानाधिकरण्यम् । विशेषणविशेष्ययोः परस्परान्वयस्थल एव तदङ्गीकारात् । समानविभक्तिकत्वादिकं पुनर्भ्रान्तकर्तृके शंखः पीत इति व्यवहार इवेष्यते । तद्धि-

शेष्यकत्वविशिष्टज्ञानविशेष्यकाभेदसम्बन्धावच्छिन्नतन्निष्ठप्रकारताकत्वप्रकार-कबोधे तद्वाचिपदसमानविभक्तिकत्वादिविशिष्टतद्वाचिपदसमभिव्याहारज्ञानस्यैव कारणत्वमनुभवबलात्स्वीकर्तव्यमिति । अथ वा यत्र शंखं शुक्लं जानाति शंखं पीतं जानातीत्यादौ विशेषणविशेष्ययोः पृथक्पृथक्ज्ञानात्यर्थज्ञानादावन्वयः प्रतीयते तत्र विशेष्यविशेषणनिष्ठविशेष्यत्वप्रकारत्वयोर्निरूप्यनिरूपकभावोऽपि स्वीक्रियत इति न कश्चिद्दोषः ।

अतः स्वरूपैक्यलक्षणमेकत्वमेव सामानाधिकरण्ये निबन्धनम् । अन्यथाऽपृथक्सिद्धत्वादेरपि सामानाधिकरण्यप्रयोजकैकत्वपदार्थत्वाश्रयणे अग्निर्माणवक इत्यादावपि अग्न्यादिपदे गौण्यादि न स्वीकर्तव्यं स्यात् । सादृश्यादिसम्बन्धेनाग्न्यादेर्माणवकादावन्वयसम्भवात् । एवं राजेव पुरोहितः राम एव सुग्रीव इत्यादावपि भाव्यम् । न च सादृश्यस्य भेदगर्भत्वात्सादृश्यज्ञाने भेदज्ञानस्य नियतत्वेन न समानविभक्तिगम्याभेदज्ञानं सम्भवतीति वाच्यम्, अपृथक्सिद्धत्वज्ञानेऽपि भेदज्ञानस्य नियतत्वात् अभिन्नत्वे सत्यपृथक्सिद्धिसम्बन्धेनान्वयासम्भवात् । अन्यथा घटापृथक्सिद्धो घटः घटो घट इत्यादौ तथा बोधप्रसङ्गात् । अत एव 'भेदव्यपदेशाच्च' त्यत्र 'य आदित्ये तिष्ठन्नादित्यादन्तर' इति शरीरशरीरिभावबोधकं वाक्यमुदाहृतं भाष्ये । योऽसौ सोऽहमित्यहमर्थापृथक्सिद्धतयाऽऽत्मत्वेनोपासनेऽपि 'पृथगात्मानं प्रेरितारं च मत्वेति' श्रुतपृथक्त्वानुसन्धानं रक्षितं भवतीत्यप्यात्मत्वोपासनाधिकरणे भाषितम् । किं च तादात्म्यं हि तदन्तर्यामिकत्वम् । तच्च शरीरात्मनोर्भेदज्ञानमन्तरेण कथमिव सम्भवति । अथान्योन्याभावरूपभेदज्ञाने सत्यप्यन्यादृशाभेदज्ञानं न न सम्भवतीत्युच्यते तर्ह्यग्निर्माणवक इत्यादौ सादृश्यबलादन्योन्याभावज्ञानेऽपि तत्र सम्भवतोऽन्यादृशाभेदस्य ज्ञानं किं न सम्भवेत् । एवं च यावन्तः सामानाधिकरण्यव्यवहारास्तावतामपि मुख्यत्वस-

म्भवात् चोरः स्थाणुरित्यादौ आरोप्यत्वमपि तादात्म्यं स्यात् । सेयं दीप-ज्वालेत्यपि मुख्यप्रयोग एवेति सोऽयं घट इत्यादिकमपि तथैवेति क्षणभङ्ग-वादिनो बौद्धस्य न प्रत्यभिज्ञया भङ्गः स्यात् । अतोऽन्योन्याभावरूप-भेदाभाव एकत्वमेव सामानाधिकरण्यनिबन्धनम् । न पुनर्भिदिर् विदारण इति भेदः पृथक्स्थितिरभेदोऽपृथक्स्थितिस्तदेवैकत्वमित्याद्युच्यमानमेकत्वमपि । यद्धि पुनरेको घट इत्यादावपृथक्स्थितत्वमेकत्वं प्रतीयत इति पुष्पितो वृक्ष इत्यादौ तादृशमपृथस्थितत्वमेव सम्बन्धः, तर्हि शरीरावयवानां वृक्षावयवानां च मिथः पृथक्स्थितत्वाभावेन उदरं वक्षः, वक्षःकण्ठः, कण्ठश्शिरः, मूलं स्क-न्धः, स्कन्धः शाखा, शाखा पर्णमित्यादिसमानाधिकरणव्यवहारप्रसङ्गः । अथ समुदायनिष्ठमपृथक्सिद्धिसम्बन्धेन स्वघटितत्वमेवैकत्वम् । पुष्पितो वृक्ष इत्यादौ पुष्पितावयवघटितसमुदायो वृक्ष इति बोध इति चेत्, तर्हि अहं स पुरुषोऽस्मीत्यत्र प्रकृते पुरुषरूपावयवघटितसमुदायत्वस्याहमर्थे जीवे बाधान्न सामानाधिकरण्यं स्यात् । अथ तदनुरोधात् केवलापृथक्सिद्धत्वमपि सम्बन्धः, तर्ह्युदरं वक्ष इत्याद्यापत्तितादवस्थ्यम् । किं चैवं शिरःशरीरं, शिरः पाण्यादिसमुदायः, शाखा वृक्षः, शाखा मूलस्कन्धशाखादिसमुदायः, तन्तुः पटः, सास्ना गौरित्यादिव्यवहारप्रसङ्गः । सम्बद्धावयवसङ्घातवृत्तिसमुदाय-त्वमेकत्वमित्यप्ययुक्तम् । एको घटः एकः पटः एकः सङ्घातः अयमेकः समुदाय इत्यादौ समुदायत्वस्यैव तत्तत्पदप्रवृत्तिनिमित्ततया एकपदस्यापि तदर्थकत्वे घटो घट इतिवच्छाब्दबोधानापत्तेः । अतः पुष्पितो वृक्ष इत्या-दौ पुष्पितप्रातिपदिकं पुष्पवदवयवघटितपरमेव । मषीलाञ्छितः पट इत्य-त्र तु लाञ्छनं नामैकदेशे विलक्षणवस्तुसम्बन्ध इति लाञ्छितशब्दः संयुक्तै-कदेशवदर्थक एवेति न कथमपि तदुदाहर्तुं शक्यम् । समुदायघटैकदेशे तादृशविशेषणसद्भावमात्रेण तादृशव्यवहारो न सम्भवतीत्यपि न । पटैक-

देशे दग्धेऽपि पटो दग्ध इति व्यवहारसद्भावस्य भाषितत्वात् । अत एक-देशवृत्तिविशेषणाश्रयत्वमपि समुदायस्य प्रतीतिबलसिद्धम् । न चैवं पृथिवीजलद्वयं गन्धवदिति व्यवहार आपादनीयः ; भवन्मतेऽपि गन्धवद्घटितसमुदायवृत्तिसमुदायत्वरूपैकत्वस्य तत्राव्याहितत्वेन तदापत्तिसम्भवात् । अपृथक्सिद्धिसम्बन्धेन सम्बद्धावयवसङ्घातत्वमेवैकत्वमिति चेत् । तर्हि तथाविध-सङ्घातैकदेशे विशेषणसद्भावमात्रेण तादृशव्यवहार एवास्माभिस्स्वीक्रियत इति न किञ्चित् । किञ्च यद्यपृथक्सिद्धत्वमेकशब्दमुख्यार्थः , तर्ह्यपृथक्सिद्धेष्ववयवेषु इम एक इति व्यवहारस्स्यात् इमेऽपृथक्सिद्धा इति व्यवहारवत् । नन्वत्र किमेकशब्द एकवचनान्त उत बहुवचनान्त इति चेत् किं तावता यद्येकशब्देनैकवचनान्तेनैव भाव्यम् , तर्हि तथैवास्तु । यद्यपृथक्सिद्धवाचित्वेन संख्यावाचित्वाभावाद्बहुत्वं युक्तम् , तर्हि तथैवेति । यद्यपृथक्सिद्धावयवघटितसमुदायत्वमेकशब्दार्थः , तर्हि सर्वं खल्विदं ब्रह्मेत्यादि-व्यवहारोऽनुपपन्नः । किं चैको घट इत्यादावुच्यमानमपृथक्सिद्धत्वं कस्य केनेति वक्तव्यम् । न तावद्यथा परमात्मा चिदचिद्भ्यां चिच्च देहेन यावदाधेयसत्तमपृथक्सिद्धः , तथा घटः केनचिदपृथक्सिद्धोऽस्ति । घटपटाद्यवयवास्तु कदाचित् पृथगपि स्थातुमलमिति न तेषामपृथक्सिद्धत्वम् । अतो धारणाकर्षणयोग्यविलक्षणसंयोगविशेष एव तत्रावयवानाम् , न पुनर्जीवेश्वरयोरिव तादृशमपृथक्सिद्धत्वम् ।

यत्तु एवं तादात्म्यसम्बन्धेनैव सर्वत्र बोधसम्भवेऽपि परमात्मवाचिशब्दाप्रयोगेण 'अहं मनुरभवम् , तं पृथिव्यब्रवी'दित्यादिचिदचिद्वाचिमात्रप्रयोगनिर्वाहायैव शरीरवाचिनां शरीरिपर्यन्तत्वं भाषितमिति, तत्रोच्यते ; परमात्मवाचिशब्दसद्भावस्थलेऽपि भाष्यकृद्भिः सर्वत्र विशिष्टवाचित्वस्य भाषितत्वेनेदृशवाक्यमात्रे सङ्कोचकल्पनस्य तद्विरुद्धत्वात् । 'प्रह्लादश्चासि दै-

त्यानाम् , रसोऽहमप्सु इत्यादिषु भवदुक्ततदन्तर्यामिकत्वरूपतादात्म्यस्याभावेन प्रह्लादरसादेः परमात्मनि तथाऽन्वयासम्भवेन तत्रापि विशिष्टवाचित्वस्यावश्यकतयेदृशस्थलमात्रपरत्वोक्त्यसम्भवात् । न च प्रह्लादादिः परमात्मनोऽन्तर्यामी । न चैकत्वमपृथक्सिद्धत्वरूपमस्त्येवेति वाच्यम् ; अभेदतादात्म्यैकत्वशब्दानां सर्वेषां यदर्थवाचित्वं तस्यैव सामानाधिकरण्यप्रयोजकत्वात् अन्यथा तादृशस्थले तादात्म्यं नास्तीति वक्तव्यत्वापातात् । एवमहं स पुरुषोऽस्मीत्यादौ भवदुक्ततादात्म्याभावादपि सर्वत्र विशिष्टवाचित्वमेव स्वीकर्तव्यम् । न चाहमर्थे पुरुषान्तर्यामिकत्वरूपं पुरुषतादात्म्यमस्तीति वाच्यम् । तथाऽपि पुरुषेऽहमर्थतादात्म्याभावात् । समानाधिकरणवाक्ये हि नीलमुत्पलमित्यादावर्थयोर्मिथस्तादात्म्यं मिथ एकत्वं मिथश्चाभेदः प्रतीयते । अतो यत्रैकत्वाभेदतादात्म्यानि मिथो भवन्ति तत्रैव सामानाधिकरण्यम् । तच्च स्वरूपैक्यलक्षणैकत्वाश्रयण एव भवति । अथोच्येत--तादात्म्यं नाम न केवलं तदन्तर्यामिकत्वम् , तच्छरीरकत्वमपि । अतो जीवब्रह्मणोर्मिथ एकरूपतादात्म्याभावेऽपि ब्रह्मणि जीवशरीरकत्वरूपतादात्म्यं जीवे ब्रह्मान्तर्यामिकत्वरूपतादात्म्यमिति प्रयोगानुसारेण सर्वविधतादात्म्यग्रहणं कर्तव्यम् । एवं च प्रह्लादश्चासीत्यादौ तच्छरीरकत्वरूपतादात्म्येनान्वयः । रसोऽहमप्स्वित्यादौ तदाश्रयापृथक्सिद्धत्वरूपतादात्म्येनेति तत्र विशिष्टवाचित्वं नापेक्षितमिति ; तर्हि प्रयोगानुरोधादहं मनुरभवमित्यादौ यथायथं स्वाश्रयपरमात्मापृथक्सिद्धत्वादिसम्बन्धस्यैव सुवचत्वेन कुत्रापि विशिष्टवाचित्वं नापेक्षितमिति भाष्यस्य दत्त एव जलाञ्जलिः । अतो यथाकथञ्चित्तादात्म्यकल्पनं परित्यज्य स्वरूपैक्यमेव भाष्यकृत्सम्मतं युक्तिसहं स्वीकर्तव्यमिति ।

यत्पुनरहं स पुरुष इत्यत्र पुरुषशब्दस्य तदात्मकपरत्वे वा तदर्थस्य तदात्मकत्वेनान्वये वा सत्येव कल्याणतमरूपदर्शनाधिकारज्ञापनं कृतं भव-

तीति ; तत्र तद्ज्ञापनाऽसम्भवः, अहंशब्दस्य विशिष्टपरत्वे वाक्यसङ्गतिश्च प्रागेव वर्णितौ । किञ्च पुरुष इत्यस्य पुरुषात्मकः पुरुषशरीरभूत इति विवक्षितार्थो न वाच्यार्थो भवति । नामरूपव्याकरणश्रुत्याद्यवगतनियमस्य तद्वाचिशब्दानां तच्छरीरवाचित्वमित्येवंरूपत्वाभावात् । तथा सति चिदचिद्वाचिशब्दानां ब्रह्मपर्यन्तत्वासिद्धेः । शरीरशरीरिभावस्य परं भाननियमे जातिगुणवाचिनां विशिष्टवचनत्वं न क्रोडीकृतं भवति । तस्मात्तद्वाचिशब्दस्य तदपृथक्सिद्धवाचित्वमित्येव नियम इति पुरुषशब्दः पुरुषापृथक्सिद्धपरः । तावता तन्नियाम्यत्वादिकं न कण्ठोक्तम् ; नियाम्यस्येव नियन्तुरप्यपृथक्सिद्धत्वात् , नियन्तृनियाम्यभावाभावेऽपि जातिगुणतदाधाराणां सुखदुःखादिगुणतदाधारात्मनां चापृथक्सिद्धिसत्त्वाच्च । तस्मात् प्रमाणान्तरालोचनया वा लक्षणयैव वा तादृशोऽर्थ इह ज्ञातव्यः स्यादिति निष्प्रयोजनमेतत् । अस्माकं पुनरहंशब्दमेव विशिष्टपरमाचक्षाणानां विशिष्टे ब्रह्मणि प्रकारविधयाऽहमर्थमाने तत्प्रकारतैकस्वभावता तत्परतन्त्रता स्पष्टमनुसंहिता भवतीति युक्ततरमेतत् । अतो भवदुक्तरीत्या ब्रह्मादिशब्दानां ब्रह्मापृथक्सिद्धमात्रार्थकत्वात् तदन्तर्यामिकत्वरूपतदात्मकत्ववाचित्वाभावात् 'क्षेत्रज्ञं चापि मां विद्धी'त्यादौ मदात्मकमित्यादिभाष्यं भवद्भिरपि फलितकथनरूपमेष्टव्यम् , लक्षणयैव वा निर्वाह्यमिति न तादृशभाष्यस्य तादृशार्थशक्तत्वगमकत्वम् । अत एव च 'ब्रह्मात्मकोऽहमस्मीति—तादधीन्यादिकं लक्षणीयं स्या'दित्याचार्यपादभाषितमिह सुतरां साधु लक्ष्यते । अपृथक्सिद्धवाचित्वपक्षेऽपि पुरुषापृथक्सिद्ध इत्येतावत एव लाभात् परमपुरुषपरतन्त्रत्वतन्नियाम्यत्वादिभवदपेक्षितार्थस्य लक्षणयैव लभ्यत्वात् ।

यच्च तत्त्वमसीत्यादाविमं निर्वाहमुपेक्ष्य महता प्रबन्धेन भाष्यकृद्भिस्त्वंशब्दस्य विशिष्टपरत्वाश्रयणमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तये, कार्यकार-

णयोः स्वरूपैक्यस्य तत्प्रकरणे प्रक्रान्तस्योपसंहारः कर्तव्य इत्याशयेनेति कल्पनम् , तदप्यनादरणीयम् । तत्त्वमसीत्यस्य ऐतदात्म्यमिदं सर्वमिति वाक्यप्राप्तार्थानुवादरूपत्वस्य विशेष उपसंहारात्मकत्वस्य भाष्यकृद्भाषितत्वेन ऐतदात्म्यमिदं सर्वमित्यत्रैव त्वं तदात्मक इति प्राप्तरीत्यैवानुवादस्य युक्ततरत्वात् । ऐतदात्म्यमिति वैयधिकरण्यनिर्देशेऽपि सर्वस्मिञ्जगति परमात्मैक्यमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिश्च यथा भवतस्तथा त्वमर्थे तदात्मकत्वान्वयेऽपि शरीरात्मभावावगमे सति लोकतो नामरूपव्याकरणश्रुत्या च विशिष्टवाचित्वज्ञानात्त्वमर्थगतपरमात्मस्वरूपैक्यप्रतिज्ञोपपत्त्योः सम्भवादुद्देश्योपादेयभावासम्भवशङ्कावकाशप्रदविशिष्टवाचित्वपक्षस्यास्वीकर्तव्यत्वात् । लाघवेन तादात्म्यसम्बन्धेनान्वयस्याभ्युपगन्तव्यत्वाच्च । अतोऽन्यथोपपादने मुख्यं सामानाधिकरण्यं न निर्वहति, परमत इव लक्षणैवापद्येतेत्येव विशिष्टवाचित्वं तत्र स्वीकर्तव्यामिति भाष्यकृतामाशय इति न कुत्रापि विशिष्टवाचितामनङ्गीकृत्यान्यथा निर्वाहो युक्तः । उपनिषद्भाष्यकृतां कचित् कचिदपृथक्सिद्धयोः सामानाधिकरण्यसम्भवकथनमपि लक्षणया निर्वाहेऽपि श्रुत्यन्तराद्यबाधेन परमतात् तस्य ज्यायस्त्वेन तावतैव परमुखापिधानं भवतीत्यभिप्रायेण ; न पुनर्भाष्यविरुद्धस्य स्वरूपैक्यातिरिक्तस्यापि सामानाधिकरण्यनिर्वाहपक्षस्य सम्मत्येति ध्येयम् ।

इदमत्रावधेयम्—तत्तदर्थवाचिशब्दानामपृथक्सिद्धिसम्बन्धेन तत्तदर्थाश्रयवाचित्ववत् तेन सम्बन्धेन तत्तदर्थविशिष्टतत्तदाधेयवाचित्वमपि यदि स्वीक्रियते तर्हि घटपटादिशब्दानां व्यक्तिमन्तरेणाकृतिमात्रस्य विशेष्यतयोपस्थापनमपि शक्त्यैव स्यात् । तथा च घटवत् द्रव्यमित्यादावपि घटत्ववत् द्रव्यमित्येवं बोधापत्तिः । एवं घटो जातिरिति व्यवहारः स्यात् घटादिपदानां तत्तदपृथक्सिद्धार्थकत्वात् । कम्बुग्रीवादिमत्त्वं घटः , सास्नादि-

मत्त्वं गौः, बाल्यं डित्थः, यौवनं डपित्थ इत्यादि च व्यवहर्तव्यं प्रसजति। एवमात्मादिशब्दानामपि तत्तदपृथक्सिद्धार्थकत्वात् देह आत्मा देहो जीव इत्यादि च स्यात् । शरीरवाचिशब्दानां शरीरिपर्यन्तत्वे शरीरमात्मेति प्रयोगापत्तिरित्याशंक्य शरीरादिशब्दानां निष्कर्षकशब्दत्वात् निष्कर्षकशब्दानां च विशिष्टवाचित्वानभ्युपगमान्न दोष इति भाष्यकृतां परिहारोऽकिञ्चित्कर एव स्यात् । तेषां विशिष्टवाचित्वाभावेऽपि आत्मादिशब्दानामपृथक्सिद्धवचनत्वेन तादृशप्रयोगप्रसङ्गतादवस्थ्यात् । न चात्मादिशब्दानामपृथक्सिद्धवाचित्वाभावः सुवचः । अयमात्मा ब्रह्मेत्यादौ दर्शनात् । न च तेषां शब्दानामाश्रयवाचिसामानाधिकरण्येऽपृथक्सिद्धवाचिता, धर्मवाचिसामानाधिकरण्ये तु न सेति स्वीक्रियत इति शंक्यम् ; अहं स पुरुष इत्यादौ पुरुषपदस्य आत्मैवेदं सर्वमित्यत्रात्मशब्दस्यान्यस्य चैवमादेराश्रयवाचिसामानाधिकरण्याभावेनापृथक्सिद्धवाचित्वासम्भवप्रसङ्गात् । तथा च विवक्षितासिद्धिः । न च खल्विदम्परत्वाभिसन्धिपूर्वकमन्वययोग्यपदसमभिव्याहारेण प्रयुज्यमानोऽपि यश्शब्दो यस्यार्थस्य कदाचिदनुपस्थापकः, तस्य शब्दस्य तस्मिन्नर्थे शक्तिरिति विपश्चिता वक्तुं शक्यम् ।

ननु यथा केषांचन शब्दानां शरीरमाकृतिः गुणो रूपमित्यादीनां नियतनिष्कर्षकत्वेऽन्येषां च गौर्मनुष्यो देवो यज्ञदत्त इत्यादीनां पिण्डविशिष्टजीववाचितया नियतानिष्कर्षकत्वे च सत्यप्यनियतनिष्कर्षका अपि शब्दा अङ्गीक्रियन्ते । अत एव क्वचिन्निष्कर्षेण, 'यः पृथिव्यां तिष्ठन्', 'योऽप्सु तिष्ठन्' 'यस्तेजसि तिष्ठन्' इत्यादिनिर्देशः; अनिष्कर्षेण च परमात्मपर्यन्ततया, 'तत्तेज ऐक्षत ता आप ऐक्षन्त, तं पृथिव्यब्रवी'दित्यादिश्च सङ्गच्छेते ; तथाऽऽत्मादिशब्दा अपि क्वचिदपृथक्सिद्धपर्यन्तवचनाः क्वचिच्च निष्कर्षका एवेति स्वीकर्तव्यमिति चेन्न । वैषम्यात् । अनियतनिष्कर्षकता हि शब्दानां

शुक्लः पटः पटस्य शुक्ल इत्येवमादिप्रयोगद्वैविध्येन परिगृह्यते तत्र च नानार्थकहर्यादिशब्देष्विव क्वचित् किञ्चिदर्थविवक्षया प्रयोग उपपद्यते । न पुनर्विवक्षायां विद्यमानायामपि त्रिवक्षितार्थवाचित्वं तत्र स्वीकुर्मः । इह पुनरपृथक्सिद्धपर्यन्तार्थविवक्षायामपि बाल्यं देवदत्तः जातिर्घटः शरीरमात्मेत्यादि न शक्यते प्रयोक्तुमिति कथं तत्र तस्य शक्तिः ? येऽपि रसगन्धादिशब्दाः स्वाश्रयद्रव्यपर्यन्ततारहिता निष्कर्षकालेऽपि परमात्मवाचिपदसामानाधिकरण्येन 'रसोऽहमप्सु कौन्तेय, पुण्यो गन्धः पृथिव्यां च'त्येवं प्रयुज्यमानाः परमात्मपर्यन्तत्वे विशिष्टवचना एव स्वीक्रियन्ते । तथा च सर्वेषामपि शब्दानामपृथक्सिद्धधर्मवाचिनामाकृत्यधिकरणन्यायसिद्धस्य धर्मिपर्यन्तवाचित्वस्य रसादिशब्देष्वपवादः क्रियमाणो न सर्वधर्मिविषयः क्रियते, किं तु परमात्मव्यतिरिक्तद्रव्यविषय एव । एवं च घटपटादिशब्दास्साक्षात्परम्परासाधारण्येन स्वनिरूपितापृथक्सिद्धसम्बन्धेन घटत्वपटत्वाद्याश्रयवचनाः । देवमनुष्यादिशब्दा अपि 'पुमान्न देवो न नरो न पशुर्न च पादपः । शरीराकृतिभेदास्तु भूपैते कर्मयोनयः' इति वचनबलेन यदि पिण्डमात्रवचना अपि भवन्ति तर्हि साक्षात्परम्परया वा स्वनिरूपिततत्सम्बन्धेन देवत्वमनुष्यत्वादिविशिष्टवाचिनः । यदि पिण्डलाक्षणिकास्तर्हि तेन सम्बन्धेन विलक्षणपिण्डवाचिनः । एवं जीवादिशब्दा अपि तथैव जीवत्वविशिष्टाभिधायिनः । रसगन्धादिशब्दास्तु परमकाष्ठापन्नपरम्परया साक्षाच्च स्वनिरूपितापृथक्सिद्धिसम्बन्धेन रसत्वगन्धत्वाद्याश्रयवाचका इति यथायथं सर्वप्रयोगसामरस्यम् ।

भवतश्च किमात्मशब्द आत्ममात्रवाची, किं वा तत्तदपृथक्सिद्धधर्म्युभयमात्रवाची, आहो तत्तदपृथक्सिद्धसर्ववाची ? नाद्यः, अयमात्मा ब्रह्मेत्यादौ विशिष्टब्रह्मपर्यन्तत्वस्यांशाधिकरणे भावितत्वेन तद्विरोधात् । न द्वितीयः, यत्र गौरं देहं निर्दिश्य तस्य किञ्चिज्जीवापृथक्सिद्धत्वविधानार्थमुच्यते

गौरोऽयमात्मेति तत्र आत्मैवेदं सर्वमित्यत्र चापृथक्सिद्धधर्मवचनत्वस्य भवदभिमतत्वात् । न तृतीयः, देह आत्मेति प्रयोगापत्तेः । अतो नापृथक्सिद्धधर्मपर्यन्तता शब्दानाम् ।

यदा तु 'चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वा'-दिति सूत्रं सर्वशब्दानां परमात्मन्येव मुख्यवृत्तिसद्भावस्यान्यत्र भाक्तत्वस्य च स्थापकं योज्यते तदा विशिष्टब्रह्मपर्यन्तत्वस्य सर्वत्र तुल्यतया पृथिव्यादिशब्दानामेवाचेतनद्रव्यादौ भाक्तः प्रयोगः, न तु रसादिशब्दानामिति कथं नियम इति चेदुच्यते । न खल्वेकः शब्दो लक्षणयैकत्र प्रयुज्यत इति शब्दान्तरस्यापि लक्षणया प्रयोग आपादयितुं युक्तः । अपि चोच्यते, शब्दा आकृतिप्रवृत्तिनिमित्तका विशिष्टब्रह्मपर्यन्तार्थाभिधायिनो येषु येष्वर्थेषु भंक्त्वा प्रयुज्यमाना दृश्यन्ते तेषां तेषामर्थानां प्रकारविधयोपस्थापकाः, येषु च न प्रयुज्यन्ते तेषां सम्बन्धविधयैव । यथा गोशब्दोऽपृथक्सिद्धिसम्बन्धेन गोत्वविशिष्टपिण्डविशिष्टजीवविशिष्टवाची, रसशब्दस्तेन सम्बन्धेन रसत्वविशिष्टं यत् तदाश्रयापृथक्सिद्धिसम्बन्धेन तद्विशिष्टपरमात्मवाचीति । अतो ये प्रकारविधया भासमानास्तेष्वेव भंक्त्वा प्रयोगो नान्यत्रेति नियम उपपद्यते । अतः प्रकारविधया भासमानेष्वेव भंक्त्वा प्रयोगस्य निरूढत्वान्न रसः पृथिवीति निरूढलक्षणया प्रयोगः । भवतस्तु सर्वशब्दानामपृथक्सिद्धवाचित्वेन पृथिव्यपृथक्सिद्धवाचित्वं पृथिवीपदे विवक्षित्वा स प्रयोग आपद्यते । किं च चराचरव्यपाश्रय इत्यनेन सर्वेषां ब्रह्मणि मुख्यवृत्तत्वमन्यत्र भाक्तत्वं चाभिहितं भवत्पक्षे न घटते । तथा हि—ब्रह्मभगवदादिशब्दा हि अपृथक्सिद्धपर्यन्तवाचिनो ब्रह्मणि भाक्ता एव भवताऽभ्युपेतव्याः । तथा च 'ब्रह्मशब्दस्तत्रैव मुख्यवृत्तस्तस्मादन्यत्र तद्गुणलेशयोगादौपचारिक' इति भाष्यविरोधोऽपि सोढव्यः । एवमेव चराचरवाचिनोऽप्यपृथक्सिद्धिसम्बन्धेन ब्रह्मपर्यन्तं

गच्छन्तः पुनरप्यपृथक्सिद्धिसम्बन्धेनैव ब्रह्मतश्चराचरेषु प्रतिनिवर्तमानास्तेष्वे-
व मुख्यवृत्ताः स्युः ब्रह्मणि च भाक्ताः । अहं मनुरभवमित्यादावहं मन्वपृ-
थक्सिद्धब्रह्मापृथक्सिद्ध इति स्वरसार्थवर्णनायेदृशार्थवचनत्वमपि भवता स्वीक-
र्तव्यमेव । अन्यथा आत्मैवेदं सर्वमित्यादावपि सर्वशब्दस्य विशिष्टवाचित्व-
प्रसङ्गादर्धजरतीयकल्पनाया अयुक्तत्वात् । एवञ्च 'वचसां वाच्यमुत्तम'मिति
'सर्ववचसां प्रतिष्ठा यत्र शाश्वती' ति च चेतनाचेतना एव स्तोतव्याः, रूप-
रसादयो वा, रूपत्वरसत्वादयो वा ये केचन धर्मकाष्ठायामवतिष्ठमानाः । ब्रह्म-
भगवदादिशब्दानामपृथक्सिद्धवाचितया तत्रैव विश्रान्तेः । रूपरसादिश-
ब्दानामपि सर्वेषां ब्रह्मपर्यन्तं गत्वाऽपि पुनस्तत्रैव प्रतिनिवर्तनाच्च । वस्तु-
तो वाच्यार्थविश्रान्तिरेव न भवति; ब्रह्मादिशब्दानामबोधः समागत्योर्ध्वमू-
र्ध्वमुत्क्रमणस्य, अन्येषां चोर्ध्वं ब्रह्मपर्यन्तं गत्वा पुनरवतरणस्य च शक्यतया
यथायथमपृथक्सिद्धिसम्बन्धेन सर्वदैवोर्ध्वगमनाधोगमनप्रवृत्ताः सर्वे शब्दाः
कुत्र विश्राम्येयुरिति । अतो घटशब्दो ब्रह्मपर्यन्तं गच्छति पुनरागच्छती-
त्येवमनवस्था ; एवं ब्रह्मशब्दादयोऽपीति चक्रवद्भ्रमणमेवेति । एवं घटादि-
शब्दानां पटादयोऽपि वाच्याः स्युः । घटशब्दस्य घटापृथक्सिद्धब्रह्मापृ-
थक्सिद्धवाचित्वात् पटस्य च तत्त्वादिति सर्वे सर्वस्य वाचका इति स्यात् ।
तस्मादनुपपत्तिशतजर्जरितमत्यन्तदुःस्थमिदमपृथक्सिद्धसामान्यवाचित्वम् ।

अपि चात्मैवेदं सर्वम् । सर्वं खल्विदं ब्रह्मेत्यादिसामानाधिकरण्यद-
र्शनमात्रेणापृथक्सिद्धवाचित्वं पदानां वक्तुमयुक्तम् ; चोरस्स्थाणुरित्यादिबा-
धार्थसामानाधिकरण्यदर्शनमात्रेण न चोर इत्यर्थस्यापि वाच्यार्थत्वापत्तेः ।
ततश्चाद्वैतिमतेनैव सुनिर्वहं सर्वमपि समानाधिकरणवाक्यमिति तस्यापि त-
न्मतेऽनुपपन्नत्ववर्णनमशक्यं स्यात् । प्रमाणं तु शब्दरूपमपृथक्सिद्धसामा-
न्यवाचित्वस्थापकं नोपलभ्यते । यथा हि तन्नामरूपाभ्यां व्याक्रियतेति

ब्रह्मणो बहुप्रपञ्चरूपत्वं तत्तन्नामवाच्यत्वं च शब्देन समर्प्यते, न तथा ब्रह्म-भगवदादिशब्दानां प्रपञ्चपरत्वं क्वचिदनुशिष्टमस्ति । युक्तिश्चाकृत्यधिकरण-गता लौकिकी जातिगुणादिनयेन धर्मवाचिनां धर्मिपर्यन्तत्वमेवावगमयति । न खल्वपृथक्सिद्धाधारवाचिन आधेयपर्यन्तता कुत्रापि लोके लक्ष्यते । आधेय-वचनानामाधारपर्यन्तता पुनः, गामानय शुक्लः पट इत्यादौ सर्वत्र दृष्टा । आधेयपर्यन्तत्वे बाधकं चाधस्तादभ्यधाम । अत एव भगवता भाष्यकृता जिज्ञासाधिकरणादौ प्रकारवाचिनां शब्दानां प्रकारिपर्यन्तत्वं जातिगुणयोरिव द्रव्यस्य शरीरभूतस्य प्रकारैकस्वभावत्वं च प्रपञ्चितम् । धर्मिवाचिनां ध-र्मपर्यन्तत्वं तु कुत्रापि नोक्तम् । लोके चाधेयस्य प्रकारतयाऽऽधारस्य प्र-कारितया चानुभव एव स्वारसिकः । अयं घटोऽयं पट इति घटत्वपटत्वा-देः प्रकारतयैव प्रायो भानात् । अत एव जातिगुणादीनामेव प्रकारैक-स्वभावत्वमभाषि । न पुनर्जातिगुणादि प्रति धर्मिणः प्रकारैकस्वभावत्वम् । जात्यादेः प्रकारतया व्यक्त्यादेः प्रकारितया च भाननियमादेवेमं विशेषण-विशेष्यभावमादाय जात्यादेर्व्यक्त्यादिपारतन्त्र्यव्यपदेशः व्यक्त्यादेर्जात्यादि प्रति स्वातन्त्र्यव्यपदेशश्च लोके भवतः । तस्माज्जातिगुणशरीरभूतप्रकार-वाचिनां व्यक्तिगुण्यात्मभूतप्रकारिवाचित्वस्यैव भाष्यकृद्भिर्बहुशः कण्ठरवेणो-क्तत्वाद्वैपरीत्यसम्भवस्य कुत्रापि मात्रयाऽप्यदर्शितत्वात् न्यायस्यापि तत्रैव प्रसरादन्यथा बहुबाधकप्रसङ्गाच्चापृथक्सिद्धाधारवाचिनामाश्रयपर्यन्तत्वं नैव सम्भवति ।

एवं तावद्भवदभिमतांशो दूषितः । अथ स्यात्—तदधीनसत्ताकस्य वस्तुनस्तद्वाचिशब्देन व्यपदेशो युक्तः । यदाहुः 'यदधीना यस्य सत्ता तत्त-दित्येव भण्यत' इति । अत एव प्राणशब्देनेन्द्रियाणामपि व्यपदेशो दृश्यते । श्रुतिरपि 'त एतस्यैव सर्वे रूपमभवन् तस्मादेत एतेनाख्यायन्त' इति ।

वायुरनिलममृतमथेदं भस्मान्तं शरीरम् ।
ओं क्रतो स्मर कृतं स्मर क्रतो स्मर कृतं स्मर ॥ १७ ॥

---

**अनन्तरं तु परिशुद्धात्मस्वरूपमुच्यते वायुरनिलममृतमिति । विद्याकर्मानुसारेण तत्र तत्र गन्तृत्वाद्वायुः । निलयनरहितत्वात् क्वचिदपि व्यवस्थितत्वाभावाच्चानिलम् । अमृतं म्रियमाणेऽपि देह-**

---

अतः क्षेत्रज्ञं चापि मां विद्धीत्यादौ मदधीनसत्ताकमित्यर्थो युक्त इत्यभिप्रेत्यैव भाष्यकृद्भिर्मदात्मकमित्येवं विवृतम् । अतोऽपृथक्सिद्धसामान्यवाचित्वनिर्बन्धस्य पदेष्वनभ्युपगमेऽपि निर्वाहोऽयं नातीवानुपपन्न इति ; उच्यते— यद्यपि लक्षणया निर्वाहे न काऽपि प्रमेयहानिः । अथापि प्रकारवाचिनां प्रकारिवाचित्वस्वाभाव्येन लक्षणां विनैव निर्वाहे लाक्षणिको निर्वाहो न युक्तः । इन्द्रियाधिकरणभाष्ये च 'प्राणाधीनधारणत्वात्त्विन्द्रियेषु प्राणशब्दव्यपदेश' इति सूक्त्या प्राणशब्दस्य मुख्यप्राणशक्तत्वं तादृशशक्यार्थाधीनधारणत्वेनेन्द्रियेषु लाक्षणिकत्वं चानेकशक्तिकल्पनागौरवादिकमभिप्रेत्याविष्कृतमेव । श्रुतप्रकाशिकायां च 'चक्षुरादीनां प्राणशब्दबोध्यत्वं लाक्षणिकम् । मुख्यप्राणस्य तु मुख्य' मित्युक्तम् । अतो मामित्यत्र मदात्मकमित्येवं भाष्यं फलितकथनरूपमेव युक्तम् । सर्वथा, अहं स पुरुषोऽस्मीत्यत्र लाक्षणिकनिर्वाहस्यानावश्यकत्वादहंशब्दस्य विशिष्टपरत्वेन मुख्यो निर्वाह एव ग्राह्यः । सर्वमिदमभिप्रेत्यैव ब्रह्मात्मकोऽहमस्मीत्यादि भाषितमाचार्यपादैरिति सर्वं निरवद्यम् ॥ १६ ॥

प्रथमपादमवतारयति अनन्तरं त्विति । आपातप्रतीतार्थव्यवच्छेदार्थस्तुशब्दः । यत्र निलीयते स्थिरं स्थीयते तन्निलं तद्राहितमनिलम् । अथ वा निलीयते एकत्र निवसतीति निलं तद्भिन्नमनिलमिति व्युत्पत्तिद्वयाभिप्रायेणाह निलयनेति । नन्वनिलशब्दस्य नपुंसकतया रूढ्यभावेऽपि

**सन्ताने स्वयममृतम् । इदं विरजत्वादीनामुपलक्षणम् । परिशुद्ध-जीवविषये प्रजापतिवाक्ये 'विजरो विमृत्युर्विशोक' इति पाठात् । अत्र वायुश्चान्तरिक्षं चैतदमृतमित्यादिपरामर्शाद्वाय्वादिशब्दानां भूतद्वितीयविषयत्वं न शङ्कनीयम् । पूर्वापराभ्यामसङ्गतेः । यद्य-प्यमीषां परमात्मविषयत्वं विशिष्टवृत्त्या योगतो वा युज्यते, तथाऽपि वरमिह नश्वरस्य देहस्यानन्तरं वचनात्तद्व्यावृत्तप्रत्यगात्मपरत्वम् । प्राणविषयत्वेऽप्यत्र मन्दं प्रयोजनम् । श्वेताश्वतरीयाश्च भोक्तृ-भोग्यनियन्तृणां विवेचने भोक्तृशब्दविवक्षितप्रत्यगात्मानममृतशब्दे-**

---

वायुशब्दरूढ्यपरित्यागाय वायुर्भूतद्वितीयं सदागतित्वात् क्वचिदप्यनवस्थित-ममृतं च भवतीत्यर्थः किं न स्यादित्यत्राह **अत्रेति । असङ्गतेरिति ।** न हि पूर्वं परत्र वा वायुर्भूतान्तरं वा प्रस्तूयत इति । ननु प्रत्यगात्मनीव परमात्मनि निर्वाहसम्भवात्परमात्मप्रकरणभङ्गो न कार्य इत्याशङ्क्याह **यद्यपी-ति । प्राणविषयत्वेऽपीति ।** अयं भावः— वायुशब्दो वायुविशेष-परः । अनिलमिति द्वितीयान्तम् । तथा च प्राणः अमृतं समीरं प्रति-पद्यतामित्यर्थस्तावन्न सम्भवति । तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीति जीवो-त्क्रमणकाले इन्द्रियवत् प्राणस्याप्युत्क्रमणस्य सहगमनस्य च श्रवणेन वायौ लयासम्भवात् । न चान्येषां प्राणस्य लयाभावेऽपि अर्चिरादिमार्गेण गच्छतो यः प्राणस्तस्य लयोऽस्त्विति वाच्यम् । तदीयस्याप्याविरजाप्राप्ति लयप्रस-क्त्यभावात् । न च तदनन्तरमेव कदाचिद्भवन् लय इह विवक्षित इति वाच्यम् , अथ भस्मान्तं शरीरमिति प्राणलयानन्तरमेव भस्मान्तत्वप्रतिपा-दनस्यासङ्गतत्वात् । स्वयमेव प्राणस्य वायौ लयसम्भवेन प्रार्थनीयत्वाभा-वाच्च । ननु प्राणो वायुविशेषो न द्रव्यान्तरमिति तत्त्वकथनपरमस्त्विति चेन्न प्रकृतसङ्गत्यभावात् । वायुविशेषत्वसिद्धौ प्राणे आत्मत्वभ्रमो नास्ती-ति सिद्ध्यतीति चेन्न, इन्द्रियेषु ज्ञानमात्रे च तद्भ्रान्त्यभावस्य तर्हि कथनीय-त्वात् । इदमेव सर्वोपलक्षणमिति चेत् अथेदं भस्मान्तं शरीरमित्येतदेवास्य

**नामनन्ति 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' इति 'क्षरं त्वविद्या ह्यमृतं तु विद्याविद्याऽविद्ये ईशते यस्तु सोऽन्यः' इति च । एवं प्रत्यगात्मस्वरूपस्य 'न जायते म्रियते वा विपश्चित्' इत्यादिप्रसिद्धममृतत्वमभिधाय क्षेत्रज्ञशरीरस्य मृतत्वमवश्यम्भावीत्याह अथेदं भस्मान्तं शरीरमिति । प्रकृतादर्थादर्थान्तरविवक्षयाऽथशब्दः । आत्मोत्क्रमणानन्तर्यार्थो वा । कर्मवश्यकार्त्स्न्यपरो वा । तथा च स्मर्यते 'गङ्गायां सिकता धारा यथा वर्षति वासवे । शक्या गणयितुं लोके न व्यतीताः पितामहाः' इति ; 'ब्रह्मादिषु प्रलीनेषु' इत्यादि च । इदमिति विशेषणमीश्वरशरीरत्वेन नित्यत्वेन च प्रमाणसिद्धानां व्यवच्छेदार्थम् । भस्मान्तमिति संस्कारमात्रव्यञ्जकम् ।**

---

तस्य च सर्वस्योपलक्षणमस्त्विति व्यर्थमेतत् । अत आत्मस्वरूपकथनपरत्वे साक्षात् सम्भवति तेनैव च सकलभ्रमाभावज्ञापने सिद्ध्यति नैतदुपपन्नम् । प्राणग्राहिणा वायुपदेनैव वायुविशेषत्वसिद्धौ अनिलममृतमित्यनयोर्वैयर्थ्यं च । अतो वायुशब्दरूढ्यर्थग्रहणे प्राणरूपविशेषे सङ्कोचस्य कर्तव्यत्वात् अनिलमित्यस्य प्रथमान्तत्वे नपुंसकानुपपत्तेः रूढ्यर्थग्रहणासम्भवात् द्वितीयान्तत्वे प्रतिपद्यतामिति वा प्रतिपद्यत इति वाऽध्याहारावश्यम्भावात् अमृतमिति पदान्वयस्य च क्लिष्टत्वात् वाय्वादिपदं रूढिप्रहाणेन योगेनात्मस्वरूपकथनपरम् अमृताक्षरं हर इतिवत् । तत्र वायुरित्यनेन गन्तृत्ववाचिनाऽणुत्वसिद्ध्या परमात्मवैलक्षण्यं, अनिलमिति पदेन पितृपथघटीयन्त्रारोहावरोहपरिभ्रमो निरयपदवीयातायातक्रम इत्यादि, अमृतमिति स्वरूपविकारराहित्यवाचिना देहेन्द्रियमनःप्राणधीवैलक्षण्यं च सम्यग्दर्शितं भवतीति । **कर्मवश्यकार्त्स्न्यपर** इति । इदंशब्दार्थे कर्मवश्ये कार्त्स्न्यमथशब्देनोच्यत इति भावः । **संस्कारमात्रव्यञ्जकमिति** । दाहखननादि तत्तत्संस्कारककर्मायत्तातिशयरूपः संस्कारो भस्मत्वाद्यवस्थाविशेषः तत्सामान्यज्ञापकम् । तथा चावस्थान्तरमापद्यमानमित्यर्थो भस्मान्तशब्दस्येति भावः । 'कृमिविड्भ-

कीटान्तत्वादेरन्यत्र प्रसिद्धस्योपलक्षणं वा । शरीरशब्दे व्युत्पत्तिनिमित्तानुसारे विशरणस्वभावत्वं गम्यते । एवं भोक्ता भोग्यं प्रेरितारं च मत्वेति क्रमेण चिदचिद्विवेकमुक्त्वा प्रेरितारं प्रकृतं महापुरुषं प्रणवेनोपादत्ते ओमिति । यथामनान्त्याथर्वणाः 'यः पुनरेतं त्रिमात्रेण ओमित्यनेनैवाक्षरेण परमपुरुषमभिध्यायीत' इति । उक्तं च योगानुशासने 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः, स पूर्वेषामपि गुरुः कालेनानवच्छेदात्, तस्य वाचकः प्रणव' इति । आह च सर्वज्ञः 'ओमित्येवं सदा विप्राः पठध्वं ध्यात केशवम्' इति । स्वयं चागायत् । 'ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्' इति । एवं सर्वत्र द्रष्टव्यम् । अथ क्रतुरूपिणं भगवन्तं ज्ञानयज्ञगोचरमभिमुखीकुर्वंस्तदनुग्रहं याचते क्रतो स्मर कृतं स्मरेति । क्रतो क्रत्वा-

---

स्रसंज्ञित'मिति श्रीभागवतप्रसिद्ध्यनुरोधेनावस्थाविशेषविस्पष्टबोधनमभिप्रेत्याह कीटेति । क्लेशकर्मविपाकाशयैरिति । अविद्याऽस्मितारागाभिनिवेशाः क्लेशाः । अस्मिता अहङ्कारः । कर्म पुण्यापुण्यरूपम् । विपाकस्तत्फलम् । आशयः वासना संस्कारः । अभिमुखीकुर्वन्निति । 'ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते । एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम्' इति समष्टिव्यष्टिरूपेण विश्वप्रकारस्य परमपुरुषस्यैकत्वेनोपासनरूपमाराधनं ज्ञानयज्ञमुक्त्वा 'अहं क्रतुरयं यज्ञ' इत्यारभ्य—'सदसच्चाहमर्जुन' इति श्लोकचतुष्केण विश्वशरीरत्वमेव विवृतं गीतासु । तादृशविश्वशरीरकपरमात्मोपासननिष्ठत्वात्प्रकृताधिकारिणः क्रतो इति सम्बुद्ध्या तमभिमुखीकरोतीति भावः । यथाक्रतुः यत्प्रकारकोपासननिष्ठः । सम्बुद्ध्युपपत्त्यर्थमाह तदिति । यद्यपि ज्योतिष्टोमादिक्रत्वात्मकत्ववत् उपासनात्मकत्वमपि परमात्मनोऽस्तीति क्रतुशब्दस्यापर्यवसानवृत्त्या परमात्मपरत्वं सुवचम्; अथाप्यन्यविषयकोपासनस्य क्रतुशब्देन ग्रहणेऽपि तदात्मकत्वस्य भगवत्यनपायात्तावता परमात्मोपासनस्यालाभात् विशिष्य क्रतुशब्दप्रयोगस्य तस्य प्रसिद्धयागपरत्वत्यागेनोपासनपरत्वग्रहणस्य चोपासनेन भगवत आराधितत्वज्ञापनार्थत्वात् भगवद्विष-

त्मक । यथाऽह अहं क्रतुरहं यज्ञ इति । 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतःप्रेत्य भवति' 'स क्रतुं कुर्वीत' 'एवं क्रतुर्हं' इत्यादिष्विवात्रापि प्रकरणादेव क्रतुशब्द उपासनपरो वा.। तद्गोचरे तु भगवति तच्छब्द उपचारात् । स्मर-सानुग्रहया बुद्ध्या विषयीकुरु । 'स्नेहपूर्णेन मनसा यन्न स्मरसि केशवे' तिवत् । उक्तं च भगवता स्थिते मनसीत्यारभ्य, 'ततस्तं म्रियमाणं तु काष्ठपाषाणसन्निभम् । अहं स्मरामि मद्भक्तं नयामि परमां गतिम्' इति । सर्वदा सर्वं साक्षात्कुर्वतः स्मर्तृत्ववचनमिह पूर्वकृतप्रत्यवेक्षणाभिप्रायम् ।

---

यकोपासनग्रहणे तद्विषयत्वं झटिति परमात्मन उपस्थितमिति च क्रतुशब्दस्योपासनविषयभूतेत्यर्थ उक्तः । अत्र 'स्थिते मनसी' ति स्वयं रहस्यशिखामणौ शरणागतिविषयतया योजितभगवद्वचनोपादानमहिम्नाऽस्यापि मन्त्रस्य तद्विषयत्वमप्याचार्यपादाभिमतं लक्ष्यते । यद्यप्यन्यार्थमुपादानम् । अथाप्यन्यार्थेनैवैतत्सूचनमपि सम्भवन्नोपेक्षामर्हति । तदा चेत्थमर्थः । चिदचिदीश्वरतत्त्वत्रयविवेक ओमित्यन्तेन कृतः । क्रतुशब्द उपासनपरो वेति सूक्त्या भरभूतभक्तिरूपोपायान्तरवाचित्वं क्रतुशब्दस्योक्तम् । सम्बुद्धिबलाच्च हे भक्ते ! भक्तिरूपोपायान्तरस्थानापन्नेत्यर्थः सिद्ध्यति । न हि तत्स्थानापन्नत्वरूपौपचारिकार्थविवक्षां विना भक्ते इति सम्बुद्धिर्घटते । भगवतो भक्तिविषयत्वेन भक्तित्वाभावात् विषयविषयिणोर्भेदात् । तदेवाह तद्गोचरे तु भगवति तच्छब्द उपचारादिति । भगवतस्तद्गोचरतया तद्रूपत्वासम्भवात् तत्स्थानापन्नत्वरूपौपचारिकार्थो ग्राह्य इति तदर्थः । एवमुपायान्तरकार्यकारित्वरूपोपायान्तरस्थानापत्तिकथनेन भरन्यास उक्तप्राय इति । संस्कारजन्यज्ञानरूपस्मृतेरीश्वरे बाधात् अभिप्रायान्तरं वर्णयिष्यन् स्थलद्वये ईदृशप्रयोगं प्रदर्शयति स्नेहेत्यादिना । स्थिते मनसीति ।....सुस्वस्थे शरीरे सति यो नरः । धातुसाम्ये स्थिते स्मर्ता विश्वरूपं च मामजमि-

**कृतं स्मरेत्यत्रापि तथैव विवक्षा । मत्कृतं यत्किञ्चिदनुकूलमनुसन्धाय कृतज्ञस्त्वं मां रक्षेति भावः । एतावदन्तं त्वत्कृतमानुकूल्यं प्रतिसन्धाय त्वमेव शेषपूरणं कुर्विति वा । स्मरन्ति हि 'जायमानं हि पुरुषन्' इत्यादि । स्वयमप्याह 'तेषां सततयुक्तानां' इत्यादि । क्रतो स्मर कृतं स्मर इत्यावृत्तिरुक्तार्थे त्वरातिशयात् ॥ १७ ॥**

---

त्यवशिष्टांशः । अनुकूलमिति अनुसन्धायेत्यस्य कर्म ; अथवा अनुकूलत्वेनानुसन्धायेत्यर्थः । **कृतज्ञ** इति । 'कथञ्चिदुपकारेण कृतेनैकेन तुष्यति । न स्मरत्यपकाराणां शतमप्यात्मवत्तया' इति वचनमभिप्रेतम् ।

यत्तु परमपुरुषप्रार्थनापरेऽस्मिन् मन्त्रद्वये कैवल्यपरिहारपरमाद्यम् , ऐश्वर्यं माभूदित्येतत्परं चान्त्यमिति विभजनम् । तत्र न किञ्चित् प्रमाणम् । अस्मिन् मन्त्रे प्रकृतिवियुक्तजीवस्वरूपं संशोध्य स्वेन जप्यमानं प्रणवं स्मरेत्युत्तरार्धे कथनात् 'ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्नि' ति गीतायां कैवल्यप्राप्त्यर्थं प्रणवव्याहरणस्योक्तत्वाच्च कैवल्यप्रार्थनैव किमत्र न कृता स्यात् । यदि मुमुक्षुप्रकरणात्तदप्रार्थनाया अवगमस्तर्हि तेनैव प्रकरणबलेनैश्वर्याप्रार्थनाया अप्यवगम इति कथमयं विभागः ? कृतं स्मरेत्यस्य मया कृतं प्रणवजपं स्मर, मया यमर्थमभिसन्धाय प्रयुज्यते तं स्मरेति व्याख्यानेनोपासकस्य कैवल्यानभिसन्धिश्चेदाविष्क्रियते तर्हि तेनैव व्याख्यानेनैश्वर्यानभिसन्धिरपि कथं नाविष्क्रियते । उत्तरमन्त्रस्यैश्वर्यपरिहारकत्वमपि न भवति । राय इत्युक्ताश्वैर्यापेक्षाया एव सुवचत्वात् । सुपथेति चैश्वर्यसाधनमार्गेष्वेव सन्मार्गपरं किं न स्यात् ? प्रकरणबलात्तन्निरासे च कैवल्यनिरासोऽपि सम्भवति । किञ्च सुपथेत्यर्चिरादिमार्गकथनादैश्वर्यव्यावृत्तिः राय इति भोग्यस्यैश्वर्यस्य कथनात् कैवल्यव्यावृत्तिरिति भवतैवोक्तत्वादुत्तरमन्त्रस्योभयपरिहारकत्वमेव सिद्ध्यतीति विभागवर्णनमयुक्तमेव ।

यच्च ऐश्वर्यपरिहारात् पूर्वं कैवल्यपरिहारस्य कथनादैश्वर्यप्राप्तावपि

तस्यानित्यत्वादनन्तरं परमपदप्राप्तिर्भवति । कैवल्यप्राप्तौ तु तस्य नित्यत्वान्न तल्लभ्यत इत्याशयः सूच्यत इति वर्णनम् , तदयुक्तम् , मानान्तरविरुद्धार्थसूचकत्वस्यासम्भवात् । 'सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक्' इत्यादिना कैवल्यस्याप्यनित्यत्वं सिद्धमिति तन्नित्यत्वकल्पनमसांप्रदायिकमयुक्तिसहमप्रामाणिकं चेत्यलं बहुना ।

यदपि कैवल्यं भेजुषां परमपदालाभरूपेदृशदुर्गत्यनुसन्धानेनैव श्रीभट्टनाथदिव्यसूरिणा स्वप्रबन्धप्रथमश्रीसूक्तचतुर्थगाथायामैश्वर्यार्थिभ्यः पूर्वं कैवल्यार्थिनामाह्वानं कृतमिति तदप्यसत् । कुत इति चेत्, अत्र पृच्छ्यते, तत्र गाथायां प्रथमे पादे 'शरीरस्य स्वकारणे विलयविधानतः प्रागागत्यास्मत्परिषदं प्रविश्य' इत्येतावत एवार्थस्यावगम्यमानतया कैवल्यार्थिनामेव ग्रहणमित्यत्र किं गमकम्? न चोत्तरगाथाया ऐश्वर्यार्थिविषयकतया पारिशेष्यमिति वाच्यम् , तत्रापि प्रमाणविरहात् । प्रथमतस्तृतीयगाथायां भगवत्कैङ्कर्यनिष्ठानामाह्वानम् , अत्र चतुर्थगाथायामैश्वर्यादिकमनुभूयाननुभूय वा तत्र दोषपरामर्शेनास्मिन्नेव जन्मनि परमैकान्तिगोष्ठीं प्रविश्य स्थातुमनसामेतावदलब्धकैङ्कर्यभोगानामाह्वानम् , अथ पञ्चम्यां , ये भगवद्भक्ता एव सन्तः प्रयोजनान्तरपराः 'आर्तो जिज्ञासुरर्थार्थी' त्युक्तविधास्तेषामल्पास्थिरपुरुषार्थबुद्धिप्रहाणेन पारमैकान्त्यप्राप्त्यर्थमाह्वानमिति विभागस्यैव शब्दतो लाभात् । सर्वत्र निःश्रेयसकैवल्यैश्वर्यार्थिविधाग्रहणेनैव विभागो वक्तव्य इति निर्बन्धायोगादिति । अस्तु नाम कैवल्यार्थ्याह्वानमत्र, उत्तरत्र चैश्वर्यार्थिमात्रस्येति । तथाऽपि तदाह्वानप्राथम्ये पश्चात्सर्वदा परमात्मालाभरूपतदीयदुर्गत्यनुसन्धानं मूलमिति निर्मूलम् । एवमाशयवर्णने कैवल्यैश्वैर्यार्थिभ्यः पूर्वं कृते भगवदेकपराणामाह्वानेपीतोऽप्याधिकदुर्गत्यनुसन्धानं मूलं वक्तव्यम् । तत्र चेत्तेषामितोऽतिशयितप्रभावभाक्त्वमात्रेणाऽऽदावाह्वानम् , तर्हि कैवल्या-

र्थिनामैश्वर्यार्थ्यपेक्षया सूक्ष्म-प्रकृतिविलक्षण-परब्रह्ममञ्जूषायमाण-ज्ञानानन्द-रूपस्वरूपदर्शननिबन्धनातिशयशालितया ततः प्रागाह्वानमित्येव पूर्वानुगुण्या-द्युक्तम् । तथा च प्रथमतः प्रथमगोष्ठ्यर्हान् परमैकान्तिन एव स्थिताना-हूय तावता परिषदपूर्तिमालोक्य तत्सन्निकृष्टान् कैवल्यार्थिनोऽनन्तरस्थाना-र्हतया प्रबोधनसौलभ्याच्चाहूय तावताऽप्यपर्याप्तिमवेक्ष्य प्राकृतप्रवणानपि परिष्कृत्य स्वीचिकीर्षतीति यथावदवगम्यते । किं चैश्वर्यं प्राप्तवतां देवभूयं गतानां 'तदुपर्यपि बादरायणः सम्भवा'दिति सूत्रोक्तनयेनार्थित्वसामर्थ्ययो-रक्षततया तदनुभवकाल एवोपासनानुभवप्रसक्तिरस्ति । कैवल्यभाजां पुन-स्तदात्वे परमात्मोपासनानुभवप्रसक्त्यभावोऽधिककालानुभाव्यतया महान्विल-म्बश्चेत्याशय एवाह्वानप्राथम्ये प्रयोजक इति सर्वथाऽन्यथासिद्धतया नाप्रा-माणिकार्थसूचनकल्पनप्रसक्तिरिति । अत्रेदमवधेयम्—अत्र गाथायां 'सूक्ष्मशरीरस्य प्रकृतौ विलयात् पूर्वमस्मद्गोष्ठीं प्रवेष्टुमभिप्रयन्तः' इति वि-शेषणदानं यादृशाधिकारिग्रहणे सफलं भवति तादृशग्रहणमेव युक्तम् । भग-वत्कैङ्कर्यनिष्ठानामिदानीमेवैतद्गोष्ठीप्रवेशोऽस्तीति ते न ग्राह्याः । आर्तार्था-र्थिभेदभिन्नानामैश्वर्यार्थिनां तु गीतायामपुनरावृत्त्यादेरनुक्तत्वात् सूक्ष्मशरीर-स्य प्रकृतिविलयात् पश्चादप्येतद्गोष्ठीप्रवेशनियमो नास्ति । तेषां प्रलये शरीरं विनैव स्थितेः । अतो जिज्ञासूनधिकृत्येयं गाथा । तथा च जिज्ञासूनां भ-वतां विरजानद्यतिक्रमणेन सूक्ष्मशरीरविलयात्पश्चादस्मादृशगोष्ठीप्रवेशोऽस्त्येव । ततः प्रागेव प्रवेशाभिप्राये कैवल्यमनपेक्ष्य प्रविशतेति गाथार्थः । अनेन च 'सूक्ष्मशरीरेण सह स्थानविशेषेऽनुभाव्यं कैवल्यम् । तदस्थिरम् । तदन-न्तरं नियतमर्चिरादिगतौ शेषांशातिलङ्घनेन सूक्ष्मशरीरत्यागः परमपदलाभ-श्चे'त्यर्थसूचनेन कैवल्यनित्यत्वमनयाऽपि गाथया बाध्यत एवेति ।

अनन्तरं च यत् श्रीमत्पराङ्कुशदिव्यसूरिणा स्वप्रबन्धप्रथमकाण्डद्वि-

तीयश्रीमुखसूक्तपञ्चमगाथायां 'कैवल्यप्रसङ्गं निर्धूय परमपुरुषार्थप्रेप्सायां प्रथममेव भगवन्तं प्रपद्यते' त्युक्तमिति । ततोऽपि कैवल्यनित्यत्वमवगम्यत इति ; तदतिस्थवीयः, बाधकत्वेन स्पष्टस्यैव साधकत्वेनोपन्यासात् । तस्या हि गाथायाः 'अपतो बाह्यसङ्गश्चेदासं कैवल्यमात्मना । त्यक्त्वा तत्स्थिरलिप्सायां विश्वस्ये(निश्चित्ये)श्वरमाश्रये' त्येव यथावत् प्रतिपदानुपूर्वीति तत्र परमपुरुषार्थे स्थिरपदप्रयोगेण कैवल्यस्यास्थिरत्वं स्पष्टमेव दर्शितम् । अत्र स्थिरलिप्सायामित्यस्य स्थाने यदि स्थिरीभवितुमिच्छायां स्थैर्यलिप्सायामिति वक्तव्यमित्यालोच्यते, तथाऽपि पुरुषार्थे स्थैर्यलिप्सेत्यस्य स्थिरपुरुषार्थलिप्सायामेव पर्यवसानात् सिद्धमेतदस्थिरत्वेन कैवल्यस्यास्थिरत्वम् । न च स्थिरीभवितुमिच्छायामित्यस्येतोऽपि कश्चिदतिशयितः पुरुषार्थोऽस्तीति पुरुषार्थान्तरापेक्षाविरहरूपबुद्धिस्थैर्यकरपुरुषार्थलिप्सायामिति तात्पर्यमिति वाच्यम् ; क्लिष्टत्वात् , तथा सति कैवल्यव्यावृत्त्यसम्भवाच्च । कैवल्यकामोऽपि हि तत्र पुरुषार्थे बुद्धिस्थैर्येणैव साधनमनुतिष्ठति । पश्चात् केवलीभूतश्च नित्यत्वेन भवदभिमते तस्मिन्नेव पुमर्थे मग्नस्तदेकतृप्तो न परमात्मप्राप्तिमपेक्षितुमलम् । यत्तु तत्र केवलस्यापि भगवच्छेषजनभव्यकृत्यश्रवणादपेक्षा भवतीति ; तदयुक्तम् । केवलो हि नाम प्राप्तकैवल्यः ; स च निर्देह इति स्वीकृतम् । एवं सति तस्य कथं नाम श्रवणमपेक्षा च ? अन्यथा स तदानीं सर्वज्ञोऽपि स्यादिति मुक्ताविशेषः प्रसज्यते । किंचैवं केवलस्य पुरुषार्थान्तरापेक्षावर्णने कैवल्यस्यानित्यत्वमप्युक्तप्रायमेव । किं च कैवल्यत्यागेन स्थिरबुद्धिमत्त्वलिप्सायामिति तात्पर्यवर्णनेऽपि, कैवल्यस्यानित्यतया तत्र बुद्धिस्थैर्यं न सिद्ध्यति। नित्यस्यापेक्षायां तु तल्लाभे न तदुपर्यपेक्षाप्रसक्तिरिति कैवल्यानित्यत्वमप्यवसीयेतैव । अत एव * पदाविशेषव्याख्याकारेणात्र

* अडैयवलन्दानरुम्पदविशेरम् ।

भगवत्प्राप्तिरूपमोक्षमात्रनित्यत्वं स्पष्टमवोचि । 'प्रथमतो विषयसङ्गत्यागसमय एव भगवन्तं प्रपद्य त्यागः कार्य' इति सूक्तिश्च न पश्चात् भगवत्प्राप्तियोग्यताविलयाभिप्राया, किं तु दीर्घकालभगवत्प्राप्तिविरोधितया विलम्बाधिक्याभिप्राया । तथा च विषयसङ्गभङ्गे केवलस्वरूपानुभवः स्वतः प्राप्नोति । तमुपेक्ष्य यदि स्थिरं लिप्स्यते तर्हि प्रथममात्मावलोकनसाधनविषयत्यागोपायानुष्ठानकाल एव भगवत्प्राप्तिरेव भवत्वित्यध्यवसाय भगवन्तं प्रपद्य तत्साधनाङ्गत्वबुद्ध्या कार्यकरणेन सङ्गत्यागः सम्पादनीयः । अन्यथा पुनरुपायसम्पादित आत्मानुभवः सुखरूपो बुद्धिमाकर्षन् बहुप्रत्यूहीभविष्यतीति भावः । अत एवाचार्यपादैः श्रीतात्पर्यरत्नावल्यां 'च्यवनवदितरप्राप्यवैषम्यवत्त्वा' दिति प्रकृतगाथार्थः संगृहीतः । श्रीसारसारे च प्रथमेऽधिकारे मोक्षे प्राप्तुरपि प्राप्यत्वमभिधाय तावता मोक्षकालिकात्मप्राप्तौ केवलात्मप्राप्तावुक्तं च्यवनधर्मत्वं न सम्भवतीत्युक्त्वा तच्च्यवनधर्मत्वमेतन्नित्यत्वं च साधयितुमियं गाथोपात्तेति सूक्त्यर्थः सम्यगवगम्यतामिति ।

यदप्योमित्यस्य प्रणवस्वरूपपरत्वमुक्त्वा ओङ्कारं स्मर प्रणवप्रतिपन्नं त्वदनन्यार्हशेषत्वलक्षणं स्वरूपनिरूपकधर्मं सम्यगनुसन्धत्स्वेति यावदिति वचनम् । तदपि न पेशलम् । इतिकारनिर्देशाभावस्थले ओमित्यस्य शब्दपरत्वे प्रमाणाभावात्, निरर्थकत्वाभावेनार्थपरत्वस्यैव युक्तत्वात् ; भवदुक्तफलितार्थकथनस्यापि भगवदनन्यार्हशेषभूतजीवमित्यर्थवर्णनेनैव सुकरत्वात् ; पूर्वं चिदचिद्विवेचनादीश्वरविवेचनस्यापि कर्तव्यतया ओमित्यस्य वाक्यात् पार्थक्यविधानस्यैव युक्तत्वात् ; स्मरेत्येतत्प्रत्योमित्यस्य कर्मत्वे तदेकवाक्यत्वे वा सति चतुर्थपादेऽपि पदान्तराणामिव प्रणवस्यापि पठनीयतया तदभावस्यैव पृथग्भावज्ञापकत्वाच्च । अत एवास्य क्रतो इतिवत् सम्बुद्धिपरत्वमपि नेष्टमाचार्यपादानाम् ॥ १७ ॥

अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ १८ ॥

---

**पुनरप्यग्निशब्दवाच्यं भगवन्तं स्वापेक्षितं प्रापयेत्याह अग्ने नय— विधेमेति । अग्ने-अग्निशरीरक । यस्याग्निः शरीरमित्यन्तर्यामिब्राह्मणम् । 'साक्षादप्यविरोधं जैमिनि' रिति न्यायादग्रनयनादिगुणयुक्तेति वा । नय- प्रवर्तयेत्यर्थः । सुपथा-शोभनेन मार्गेण । प्रतिषेधस्पर्शरहितेनोपायेनेति यावत् । राये-विद्यार्थशरीरसंरक्षणत्वदर्चनाद्यनुगुणाय धनाय । यद्वाऽर्थप्रकरणानुगुण्यात्, 'अतस्करकरग्राह्यमराजकवशंवदम् । अदायादविभागार्हं धनमार्जय सुस्थिरम् ।'**

---

**सुपथेति** । अत्रार्चिरादिमार्गपरत्वमप्याचार्यपादाभिमतमेवेति श्रीकूरनारायणस्वामिभिरेवोक्तम् । अणुः पन्था इत्यपि श्रुत्यन्तरम् । धूमादिमार्गव्यावृत्तये शोभनत्वोक्तिः । उपरि **उपायेने**ति भाषणं तु **राय** इत्यस्य लौकिकधनपरतया व्याख्यानस्य समनन्तरं क्रियमाणतया तदौचित्याय । अनन्तधनग्रहणपक्षे चार्चिरादिरभिमत एवेति । तदा च **नये**त्यस्य **प्रापये**त्यर्थः । वैकुण्ठमिति अर्थसिद्धम् । **प्रतिषेधे**ति । 'परिवित्तिः परिवेत्ता यया च परिविद्यते । सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः । 'न शूद्राय मतिं दद्यात्' 'कुलटा षण्डपतितवैरिभ्यः काकिणीमपि । उद्यतामपि गृह्णीयान्नापद्यपि कदाचने' ति याजनाध्यापनप्रतिग्रहेषु प्रतिषिद्धमार्गो मा भूदिति भावः । द्वितीयपक्षे प्रतिषेधस्पर्शराहित्येनेति पदं श्रुतिस्मृत्यापातप्रतीतो ज्ञानातिरिक्तोपायो 'नान्यः पन्था' इति निषिद्ध इति स मा भूदित्येवंपरम् । **यद्वाऽर्थप्रकरणानुगुण्यादिति** । विद्यार्थप्रकरणानुगुण्यादिति पाठः पेशलः । श्रीकूरनारायणभाष्य इव विद्याप्रकरणानुगुण्यादिति पाठश्चेत् एतत्पूर्वं यद्वेति वा अलौकिकं वेत्युपरि वाकारो वा निवेश्यः ।

'बत मे वित्त' मित्यादिसूक्तमलौकिकं धनमिह विवक्षितम् । एक एव मन्त्रः प्रकरणादिभिर्विशेषितस्तत्तदनुगुणमर्थं विवक्षतीति सम्यङ्न्यायविदः । अस्मान् त्वदनन्यभावान् अनन्यगतींश्च । विश्वानि देव वयुनानि विद्वान्-देव- अस्मदपेक्षितप्रदानानुरूपविचित्रक्रीडायुक्त । माया वयुनं ज्ञानमिति नैघण्टुकाः । अतो ज्ञानमुखेनोपायविशेषा इह वयुनशब्देन विवक्षिताः । सर्वांस्तत्तदधिकारानुगुणांश्चतुर्विधपुरुषार्थोपायान्यथावद्विद्वांस्त्वमविदुषोऽस्मान् नेतुमर्हसीति भावः । युयोध्यस्मज्जुहुराणम्-बन्धनात्मकतया अचिन्त्यप्रकारकौटिल्यवत्तया वा बाधमानमित्यर्थः एनः-अकृत्यकरणकृत्याकरणादिरूपं त्वदनुभवादिप्रतिबन्धकम्, अस्मत्तो युयोधि पृथक्कुरु, विनाशयेत्यर्थः । भूयिष्ठां ते नम उक्तिं विधेम 'अनन्यगति'रित्यादिगुणैरावृत्तितश्च भूयसीं 'नमउक्तिं' विदध्महे । व्यत्ययो हि बहुलमनुशिष्टः । नमउक्तेरनुवृत्तिं वा नाथं प्रति नाथते । 'नम इत्येव वादिन' इति हि मुक्तलक्षणा अपि पुरुषा मोक्षधर्मे प्रतिपादिताः । मानसकायिकयोर्नमस्कारभावेऽपि नमश्शब्दमात्रेण प्रसत्तुमर्हतीत्युक्तिशब्दाभिप्रायः । एवं परतत्त्वतद्विभूतियोगतदुपासनतद्विशेषान् संगृह्य संहितेयं समपूर्यत ॥ १८ ॥

---

बत मे वित्तमिति । 'अनन्तं बत मे वित्तं भाव्यं मे नास्ति किंचन । मिथिलायां प्रदीप्तायां न मे किंचन दह्यते' (मोक्षधर्मे २२३) इति पूर्णः श्लोकः । अत्र मन्त्रे 'त्वदनन्यभावानन्यगतींश्चे'ति 'अविदुषोऽस्मान्' इति च भाषितत्वात् पूर्वमन्त्रस्येव प्रपत्तिपरत्वमपीष्टं प्रतीयते । तदाऽस्मानिति बहुवचनं प्रपत्तृपुरुषाश्रितानामपि क्रोडीकारार्थम् । पूर्वमन्त्रे स्मरेत्यनेन स्मरामीत्यस्य प्रत्यभिज्ञानम् । अत्र च नयेत्यनेन नयामीत्यस्य । जुहुराणमिति । 'हुर्छा कौटिल्य' इति धात्वर्थः कौटिल्यं वञ्चकत्वमिति मतेनाह बन्धनात्मकतयेति । कौटिल्यमपसरणमिति मतेन द्वितीयार्थः । अथ वा 'हृ प्रसह्यहरण' इति धात्वभिप्रायेण प्रथमोऽर्थः । बाधमानमिति सर्वथा पर्यवसितार्थः ॥ १८ ॥

**विद्वच्छात्रप्रीतय** इति । विदुषां छात्राणां च प्रीतय इत्यर्थः । अथ वा विदुषां सतां छात्राणां प्रीतय इति । छात्राणामपि शास्त्रपरिश्रमविधुराणामिदमर्थावगाहासम्भवाद्विद्वदिति । विदुषामप्यौपनिषदार्थविज्ञानस्य कृते कुत्रापि यथावच्छात्रभावमनधिगतवतामस्मदभिहितार्थधारणनिपुणप्राज्ञमणिपरम्परामुखेनास्मदाशयमनवबुद्धवतां चात्यन्तगभीराऽऽस्माकभाष्यभावार्थो न सम्यक् प्रकाशेतेत्युपदिशति छात्रेति ।

अत्यिष्ठस्याप्यनुवाकस्याखिलपरमतपरिमर्दकत्वातिशयं प्रथयति अभेदमिति । **अभेदं भोक्तॄणां** जीवानां परस्परैक्यम् । **भविनामेव परतां** जीवब्रह्मैक्यम् । **भेदाभेदं जिनसुगतनीतिं च जगति** चेतनाचेतनात्मकप्रपञ्चे ब्रह्मप्रतियोगिकं भेदाभेदं भास्करयादवमतम् , जिनादिवन्निरीश्वरत्वं कर्ममात्राधीनोत्पत्तिकत्वं च; तथाऽऽत्मनः स्वरूपविकारभाक्त्वं विज्ञानमात्रात्मत्वं च; आत्मनो जन्यत्वादेर्यादवमते दृष्टेः, जैनैरपि सङ्कोचविकासवर्णनात्, शङ्करमतेऽपि बौद्धवद्विज्ञानमात्रात्मवचनात् । **असम्पाद्यां मुक्तिं** कण्ठस्थितकनकनयेन नित्यप्राप्तत्वम् । भवभयमलीकं मिथ्याभूतम् । 'य उ विद्यायां रताः, रायेऽस्मान्, भूयिष्ठान्ते नमउक्तिं विधेम, तस्मिन्नपः, ईशावास्यम् , याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः, वायुरनिलममृतम् , कविर्मनीषी परिभूः स्वयम्भूः, विद्ययाऽमृतमश्नुत इत्यादौ स्वारस्यपर्यालोचनया यथासम्भवमीदृशार्थप्रतिभटत्वं प्रतिमन्त्रं परिशीलनीयमिति ।

तदेवमखिलमहीमण्डलमण्डनायित-प्रबलजपतपःप्रभृति बहुविधप्रभावभावितप्रचण्डपाण्डित्यप्रतिभापरिकर्मितानल्पकल्पनाशिल्पसामर्थ्यसाम्राज्यधुरन्धरसकलकविकथककुलकलितबहुलकोलाहलक्षपणनिपुणनिजविजयघोषणाजङ्घालघणघणविद्रावितविशिष्टदिशानिद्रस्य, निखिलतन्त्रनिष्णातनिश्शेषजनैनपुणनिर्यन्त्रणनियन्त्रणनिष्कम्पनिखातनिजविजयस्तम्भविभ्राजितविविधवि -

व्यक्ताव्यक्ते वाजिनां संहितान्ते
व्याख्यामित्थं वाजिवक्त्रप्रसादात् ।
वैश्वामित्रो विश्वमित्रं व्यतानीद्
विद्वच्छात्रप्रीतये वेङ्कटेशः ॥

अभेदं भोक्तॄणामथ च भविनामेव परतां
तथा भेदाभेदं जिनसुगतनीतिं च जगति ।
असम्पाद्यां मुक्तिं भवभयमलीकं च पठता-
मसावीशेत्यादिर्न कथमनुवाकः प्रतिभटः ॥
हरिः ओम् ।

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु

ईशावास्योपनिषद्भाष्यम् ।

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥



---

रुदहारमध्यमणिवरायमाणश्रीरङ्गनायिकासबहुमानविश्राणितसर्वतन्त्रस्वतन्त्र-ताबिरुदस्य, वृत्तवर्तमानवर्तिष्यमाणसमस्तकुमतिमतसमूलोन्मूलनसाधिष्ठल-ध्यन्ततत्त्वहितपुमर्थसम्प्रदायस्थापन, सकलसदाचार्यगुणगारिममुख, निखिल-रत्नरत्नाकरतानिरीक्षणसन्तुष्टस्वाभाविकसार्वज्ञ्यश्रीरङ्गनाथवितीर्णवेदान्ताचार्य-कस्याशेषजगद्गुरोरस्मद्गुरोरस्य भगवतः सूक्तिषु सर्वार्थसिद्धितात्पर्यचन्द्रिकादिषु परिचयश्रद्धावैधुर्यपरिकल्पितो मिथ्यादूषणकल्पनाकोलाहलः सर्वोऽप्यसमञ्जसः केवलमनर्थोपादक इत्यवधार्य तर्कप्रमाणसम्प्रदायसम्मतमस्यैव महात्मनो भाष्यमात्मक्षेमकामैरशेषैः परिग्राह्यमिति कृतं विस्तरेण ।

प्रतितन्त्राविरोधेन भिन्नाभिन्नार्थवर्णनम् ।
समस्तेष्वपि वाक्येषु सम्भवन्नैव दुष्यति ॥ १ ॥

तस्मादुपनिषद्भाष्यकृतां मन्त्रचतुष्टये ।
बृहदारण्यकोपान्त्ये सह्यमन्यार्थवर्णनम् ॥ २ ॥

अतश्चाचार्यपादोक्तिष्वर्थेष्वाग्रहयालुभिः ।
वृथा दूषणवैयग्री गृहीता नैव शस्यते ॥ ३ ॥

न हि सम्भवतः सर्वान् वक्तुमर्थानिमेऽप्यलम् ।
विस्तृणाते न सर्वज्ञोऽप्यर्थादिङ्मात्रदर्शकः ॥ ४ ॥

अभियुक्ताग्रगण्यानामाचार्याणां हि सूक्तिषु ।
अवधाय परामृश्य भावं बुद्ध्येत बुद्धिमान् ॥ ५ ॥

विरुद्धभाषणं व्यर्थं विस्तरः पिष्टपेषणम् ।
ईदृशानि बहिष्कृत्य प्रबन्धा तु प्रशस्यते ॥ ६ ॥

क्व भाष्यमेतद्गहनं गुरोर्नः
क्व नाम मे बुद्धिरियं लघिष्ठा ।
तदस्ति यत्सन्मतमत्र तस्मिन्
तस्यैव दासः करतूलिकाऽहम् ॥ ७ ॥

व्याख्यानमुद्रितसपुस्तकहस्तपद्मं
सत्त्वप्रवर्तकमपारकृपाम्बुराशिम् ।
विद्यामयं विहतहेयमुपैमि साक्षाद्
वक्त्र हयं विहितदेशिकभूमिकं च ॥ ८ ॥

भृशलब्धतन्त्रतर्कप्रसाधिना परिचितान्यशास्त्रेण ।
अक्रियत वीरराघवसुधियेत्याचार्यभाष्यतात्पर्यम् ॥ ९ ॥

यतः सर्वार्थलाभो नः प्रज्ञावैराग्यवारिधेः ।
श्रीरङ्गलक्ष्मणाभिख्या देवता प्रीयतामियम् ॥ १० ॥

---

आचार्यभाष्यतात्पर्यं सम्पूर्णम् ॥

श्रीगुरुभ्यो नमः ॥

श्रीमते हयवदनपरब्रह्मणे नमः ॥

श्रीरस्तु ॥

श्रीमते रङ्गरामानुजमहादेशिकाय नमः ॥





